श्छणप्रत्ययो भवति । कार्शाश्वीयः । आरिष्टीयः । कृशाश्व । अरिष्ट । अरीश्व । वेश्मन् । विशाल । रोमक । शबल । कूट । रोमन् । वर्वर । सुकर । सूकर । प्रतर । सदृश । पुरग । सुख । धूम । अजिन । विनता । अवनत । विकुघास । अरुस् । अवयास । मौद्गल्य- कृशाश्वादिः । ऋश्यादिभ्यः कः प्रत्ययो भवति । ऋश्यकः । न्यग्रोधकः । ऋश्य । न्यग्रोध । शिरा । निलीन । निवास । निधान । निवात । निबद्ध । विबद्ध । परिगूढ । उपगूढ । उत्तराश्मन् । स्थूलबाहु । खदिर । शर्करा । अनुडूह् । परिवंश । वेणु । वीरण-ऋष्यादिः । कुमुदादिभ्यष्ठच्प्रत्ययो भवति । कुमुदिकम् । शर्करिकम् । कुमुद । शर्करा । न्यग्रोध । इत्कट । गर्त्त । बीज । अश्वत्थ । बल्वज । परिवाप । शिरीष । यवाष । कूप । विकङ्कत- कुमुदादिः । काशादिभ्य इलः प्रत्ययो भवति । काशिलम् । वाशिलम् । काश । वाश । अश्वत्थ । पलाश । पीयूष । विश । तृण । नर । चरण । कर्दम । कर्पूर । कण्टक । गृह-काशादि । तृणादिभ्यः शः प्रत्ययो भवति । तृणशः । नडशः । तृण । नड । बुस । पर्ण । वर्ण । चरण । अर्ण । जन । बल । लव । वन-तृणादिः । प्रेक्षादिभ्य इनिप्रत्ययो भवति । प्रेक्षी । हलकी । प्रेक्षा । हलका । बन्धुका । ध्रुवका । क्षिपका । न्यग्रोध । इर्कुट-प्रेक्षादिः । अश्मादिभ्यो रप्रत्ययो भवति । अश्मरः । अश्मन् । यूष । रूष । मीन । दर्भ । वृन्द । गुड । खण्ड । नग । शिखा-अश्मादिः । सख्यादिभ्यो ढञ् प्रत्ययो भवति । साखेयम् । साखिदत्तेयम् । सखि । सखिदत्त । वायुदत्त । गोहित । भल्ल । पाल । चक्रपाल। चक्रवाल । छगल । अशोक । करवीर । सीकर । सकर । सरस । समल-सख्यादिः । संकाशादिभ्यो ण्यप्रत्ययो भवति । सांकाश्यम् । काम्पिल्यम् । संकाश । काम्पिल्य । समीर । कश्मर । शूरसेन । सुपथिन् । सक्थच । यूप । अंश । एग । अश्मन् । कूट । मलिन । तीर्थ । अगस्ति । बिरत । चिकार । विरह । नासिका-संकाशादिः । बलादिभ्यो यः प्रत्ययो भवति । बल्यः । कुल्यम् । बल । वुल । तुल । उल । डुल । कवल । वन । कुल-बलादिः । पक्षादिभ्यः फक् प्रत्ययो भवति । पाक्षायणः । तौषायनः । पक्ष । तुष । अण्ड । कम्बलिक । चित्र । अश्मन् । अतिस्वन् । पथिन्पन्थ च-पक्षादिः । कर्णादिभ्यः फिञ्प्रत्ययो भवति । कार्णायनिः । वासिष्ठायनिः । कर्ण । वसिष्ठ । अलुश । शल । डुपद । अनडुह्य । पाञ्चजन्य । स्थिरा । कुलिश । कुम्भी । जिवन्ती । जित्व । अण्डीवत्- कर्णादिः । सुतङ्गमादिभ्य इञ्प्रत्ययो भवति । सौतङ्गमिः । मौनचित्तिः । सुतङ्गम । मुनिचित । विप्रचित्त । महापुत्र । श्वेत । गडिक । शुक्र । विग्र । बीजवापिन् । श्वन् । अर्जुन् । अजिर । जीव-सुतङ्गमादिः । प्रगदिन्नादिभ्यो ञ्यः प्रत्ययो भवति । प्रागद्यम् । प्रगदिन् । मगदिन् । शरदिन् । कलिव । खडिव । गडिव । चूडार । मार्जार । कोविदार- प्रगद्यादिः । वराहादिभ्यः कक् प्रत्ययो भवति । वाराहकम् । पालाशकम् । वराह । पलाश । शिरीष । पिनद्ध । स्थूण । विदग्ध । विजग्ध । विभग्न । बाहु । खदिर । शर्करा-वराहादिः । कुमुदादिभ्यष्ठक् प्रत्ययो भवति । कौमुदिकम् । कुमुद । गोमथ । रथकार । दशग्राम । अश्वत्थ । शाल्मली । कुण्डल । मुनिस्थूल । कूट । मुचुकर्ण- कुमुदादिः । शिरीष-शब्दोऽरीहणादिषु, कुमुदादिषु वराहादिषु च पठ्यते, औत्सर्गि-कोऽपि तत इष्यते । तस्य चं वरणादिषु दर्शनाल्लुब्भवति । तथा चोक्तम्-शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनमिति ।

अर्थ—वुञ् आदि सत्रह प्रत्यय हैं। अरीहण आदि सत्रह प्रातिपदिकगण हैं। प्रत्येक के साथ आदि शब्द का सम्बन्ध है। अरीहणादि सत्रह गणों में पठित प्रातिपदिकों से यथासंख्य करके वुञ् आदि चातुरर्थिक प्रत्यय होते हैं। यह अण् का अपवाद है। यथासम्भव अर्थ का सम्बन्ध जानना चाहिए। सूत्र का विशद अर्थ उदाहरणों के द्वारा जाना जा सकता है।

उदा० (क) अरीहणादिभ्यो वुञ्—

(1) आरीहणकम्

अरीहण वुञ्—हलन्त्यम्, युवोरनाकौ,

आरीहण अक—आदिवृद्धि, विभक्तिकार्य।

(2) द्रौघणकम् (पूर्ववत्)।

शेष उदाहरण मूल में देखें।

(ख) कृशाश्वादिभ्यश्छण्—

(3) कार्शाश्वीयः

कृशाश्व छण्—आदिवृद्धि, ईयादेश,

कार्शाश्व ईय सु—विभक्तिकार्य।

(4) आरिष्टीयः (पूर्ववत्)।

शेष उदाहरण मूल में देखें।

(ग) ऋश्यादिभ्यः कः—

(5) ऋश्यकः

ऋश्यक—आदिवृद्धि नहीं,

ऋश्यकः—सु।

(6) न्यग्रोधकः

न्यग्रोध क। पूर्ववत्।

(घ) कुमुदादिभ्यष्ठच्—

(7) कुमुदिकम्

कुमुद ठच्—आदिवृद्धि नहीं, ठस्येकः।

(8) शर्क्करिकम्

शर्क्करा ठच्।

शेष उदाहरण मूल में देखें।

(ङ) काशादिभ्य इलः—

(9) काशिलम्

काशा इल—सु होकर रूप बना।

(10) वाशिलम्

वाशा इल।

शेष उदाहरण मूल में देखें।

(च) तृणादिभ्यः शः—

(11) तृणशः

तृण श—सु होकर।

(12) नडशः (पूर्ववत्)।

शेष उदाहरण मूल में देखें।

(छ) प्रेक्षादिभ्यः इनिः—

(13) प्रेक्षी

प्रेक्षा इनि—आकार का लोप,

प्रेक्षिन्—सु।

(14) हलकी

हलका इनि—पूर्ववत्।

शेष उदाहरण मूल में देखें।

(ज) अश्मादिभ्यो रः—

(15) अश्मरः

अश्मन् र—नकारलोप।

अश्मर सु—विभक्तिकार्य।

(झ) सख्यादिभ्यो ढञ्—

(16) सखि ढञ्—एयादेश, आदिवृद्धि,

साखेय सु—सु।

(17) साखिदत्तेयम्

सखिदत्त ढञ्—पूर्ववत्।

शेष उदाहरण मूल में देखें।

(ञ) सङ्काशादिभ्यो ण्यः—

(18) साङ्काश्यम्

सङ्काश ण्य—चुटू, आदिवृद्धि,

साङ्काश् य सु—विभक्तिकार्य।

(19) काम्पिल्यम्

कम्पिल ण्य—पूर्ववत्।

शेष उदाहरण मूल में देखें।

(ट) बलादिभ्यो यः—

(20) बल्यः

बल य—अकारलोप,

बल्य सु—विभक्तिकार्य।

(21) कुल्यम्

कुल य—अकारलोप, शेष पूर्ववत्।

शेष उदाहरण मूल में देखें।

(ठ) पक्षादिभ्यः फक्—

(22) पाक्षायणः

पक्ष फक्—आयनादेश, आदिवृद्धि,

पाक्षायन सु—णत्व, सु।

(23) तौषायनः

तुष फक्—आदिवृद्धि।

शेष उदाहरण मूल में देखें।

(ड) कर्णादिभ्यः फिञ्—

(24) कार्णायनिः

कर्ण फिञ्—आयनि आदेश,

कार्णायनि सु—सु।

(25) वासिष्ठायनिः

वसिष्ठ फिञ्—पूर्ववत्,

वासिष्ठायनि—सु।

(ढ) सुतङ्गमादिभ्य इञ्—

(26) सौतङ्गमिः

सुतङ्गम इञ्—आदिवृद्धि।

(27) मौनिचित्तिः
मुनिचित्त इञ्—आदिवृद्धि,
मौनिचित्ति—सु।

**(ण) प्रगदिन्नादिभ्यो ञ्यः—**

(28) प्रागद्यम्
प्रगदिन् ञ्य—चुटू,
प्रागद् य—टिलोप।
शेष उदाहरण मूल में देखें।

**(त) वाराहादिभ्यः कक्—**

(29) वाराहकम्
वराह कक्—आदिवृद्धि,
वाराहक सु—सु।

(30) पालाशकम्
पलाश कक्—आदिवृद्धि,
पालाशकम्—सु।
शेष उदाहरण मूल में देखें।

**(थ) कुमुदादिभ्यष्ठक्—**

(31) कौमुदिकम्
कुमुद ठक्—आदिवृद्धि, ठस्येकः,
कौमुदिक सु—सु हुआ।

शिरीष शब्द का अरीहणादि गण में, कुमुदादि गण में तथा वराहादि गण में पाठ प्राप्त होता है। उससे औत्सर्गिक प्रत्यय भी होता है। इसका वरणादि गण में पाठ होने से लुप् होता है। यथा—

शिरीषाणामदूरभवो ग्रामः—शिरीषाः
तस्य वनम्—शिरीषवनम्।

## (1509) जनपदे लुप् *81* (1293)

**देशे तन्नाम्नीति यश्चातुरर्थिकः प्रत्ययो भवति तस्य देशविशेषे जनपदेऽभिधेये लुब्भवति। ग्रामसमुदायो जनपदः। पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः। मत्स्याः। अङ्गाः। बङ्गाः। मगधाः। सुह्याः। पुण्ड्राः। इह कस्मान्न भवति-उदुम्बरा अस्मिन् सन्ति औदुम्बरो जनपदः, वैदिशो जनपदः इति? तन्नाम्नीति वर्त्तते, न चात्र लुबन्तं तन्नामधेयं भवति।**

**अर्थ**—जनपद अर्थ वाच्य होने पर चातुरर्थिक प्रत्यय का लुप् होता है। ग्रामों के समुदाय को 'जनपद' कहते हैं।

**उदा०** (1) पञ्चालाः
पञ्चालानां निवासो जनपदः—अण्,
पञ्चाल अण्—अण् का लुप् हुआ, प्रत्ययलक्षण से आदिवृद्धि प्राप्त हुई, न लुमता० से निषेध,
पञ्चाल जस्—विभक्तिकार्य।

(2) कुरवः (पूर्ववत्)।
(3) मत्स्याः (पूर्ववत्)।
(4) अङ्गाः (पूर्ववत्)।
(5) बङ्गाः (पूर्ववत्)।
(6) मगधाः (पूर्ववत्)।
(7) सुह्याः (पूर्ववत्)।
(8) पुण्ड्राः (पूर्ववत्)।
(9) औदुम्बरो जनपदः
उदुम्बरा अस्मिन् सन्ति—लुप् नहीं हुआ।
(10) वैदिशो जनपदः (पूर्ववत्)।

लुबन्त तन्नामधेय नहीं होता है।

## (1510) वरणादिभ्यश्च *82* (1301)

**वरण इत्येवमादिभ्य उत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य लुब्भवति। अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः। शृङ्गी। शाल्मलयः। चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति। कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी। शिरीषाः। काञ्ची। वरणाः। पूर्वौ गोदौ। आलिङ्ग्यायनः। पर्णी। शृङ्गी। शाल्मलयः। सदाण्वी। वणिकि। वणिक। जालपद। मथुरा। उज्जयिनी। गया। तक्षशिला। उरशा। आकृत्या।**

**अर्थ**—वरण आदि प्रातिपदिकों से विहित चातुरर्थिक प्रत्यय का लुप् होता है। जनपद से रहित के लिए यह विधान है।

**उदा०** (1) वरणाः
वरणानामदूरभवं नगरम्—'वरणा' नदी का नाम है, प्रत्यय का लुप् हुआ,
वरण अण् → वरण जस्—विभक्तिकार्य।

(2) शृङ्गी (पूर्ववत्)।
(3) शाल्मलयः (पूर्ववत्)।

सूत्र में चकार अनुक्तसमुच्चय के लिये है। यह एक आकृतिगण है।

(4) कटुकबदरी—पूर्ववत् लुप्।
(5) शिरीषाः (पूर्ववत्)।

शेष उदाहरण मूल में देखें।

### (1511) शर्कराया वा *83* (1302)

**शर्कराशब्दादुत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य वा लुब्भवति। वाग्रहणं किम्, यावता शर्कराशब्दः वराहादिषु च पठ्यते, तत्र पाठसामर्थ्यात्प्रत्ययस्य पक्षे श्रवणं भविष्यति? एवं तर्ह्येतज्ज्ञापयति-शर्कराशब्दादौत्सर्गिको भवति, तस्यायं विकल्पितो लुबिति। शर्करा, शार्करम्। गणपाठाच्च श्रवणम्, उत्तरसूत्रे विहितौ च द्वौ प्रत्ययौ। तदेवं षड् रूपाणि भवन्ति-शर्करा, शार्करम्, शर्करिकम्, शार्करकम्, शार्करिकम्, शर्करीयमिति।**

**अर्थ**—शर्करा शब्द से विहित चातुरर्थिक प्रत्यय का विकल्प से लुप् होता है। शर्करा शब्द का पाठ कुमुदादि गण में तथा वराहादि गण में प्राप्त होता है। वहाँ पाठ के सामर्थ्य से प्रत्यय का पक्ष में श्रवण होता है। अतः सूत्र में 'वा' का ग्रहण व्यर्थ है।

(समा०) इससे ज्ञापित होता है कि शर्करा शब्द से औत्सर्गिक प्रत्यय होता है। इसका विकल्प से लुप् होता है।

उदा० (1) शर्करा
शर्करा अण्—'तदस्मिन्नस्तीति' के द्वारा,
शर्करा—प्रत्यय का लुप्, सु।

(2) शार्करम्
शर्करा अण्—लुप् अभाव पक्ष में आदिवृद्धि,
शार्कर् अ सु—विभक्तिकार्य।

(3) शर्करिकः
शर्करा ठच्—कुमुदादि में पाठ होने से 'वुञ्छण्कठ०' से 'ठच्',
शर्करिक सु—प्रथमा एकवचन।

(4) शार्करकम्
शर्करा कक्—वराहादिगण में पाठ होने से 'वुञ्छण्०' से 'कक्', आदिवृद्धि,
शार्करकम्—सु।

(5) शर्करीयम्
शर्करा छ—रूप बना।

(6) शार्करिकम्
शर्करा ठक्—पूर्ववत्।

गणपाठ से उत्तर सूत्र (4.2.84) से विहित ठक् और छ प्रत्यय होते हैं। इस प्रकार उपर्युक्त छः रूप बनते हैं।

### (1512) ठक्छौ च *84* (1303)

**शर्कराशब्दाट्ठक् छ इत्येतौ प्रत्ययौ भवतश्चातुरर्थिकौ। यथासम्भवमर्थसम्बन्धः। शार्करिकम्, शर्करीयम्।**

**अर्थ**—शर्करा प्रातिपदिक से चातुरर्थिक ठक् और छ प्रत्यय पर्यायेण होते हैं। यथासम्भव अर्थ का सम्बन्ध होता है।

उदा० (1) शार्करिकम् (ठक्)
(2) शर्करीयम् (छ)।

### (1513) नद्यां मतुप् *85* (1304)

**नद्यामभिधेयायां मतुप्प्रत्ययो भवति चातुरर्थिकः। तन्नाम्नो देशस्य विशेषणं नदी। उदुम्बरा यस्यां सन्ति उदुम्बरावती। मशकावती। वीरणावती। पुष्करावती। इक्षुमती। द्रुमती। इह कस्मान्न भवति-भागीरथी, भैमरथी? मतुबन्तस्यातन्नामधेयत्वात्।**

**अर्थ**—नदी अभिधेय होने पर ङ्यन्त, आबन्त तथा प्रातिपदिकसंज्ञक शब्दों से चातुरर्थिक मतुप् प्रत्यय होता है। उकार तथा पकार की इत् संज्ञा होती है।

उदा० (1) उदुम्बरावती
उदुम्बरा यस्यां नद्यां सन्ति—मतुप्
उदुम्बर वत्—मादुपधायाश्च, मतो बह्वचो०,
उदुम्बरावती—उगितश्च, सु।

(2) मशकावती (पूर्ववत्)।
(3) पुष्करावती (पूर्ववत्)।
(4) इक्षुमती (पूर्ववत्)।
(5) द्रुमती (पूर्ववत्)।

(6) भागीरथी
यहाँ मतुप् प्रत्ययान्त से हुआ है; संज्ञा होने से।

(7) भैमरथी
'भागीरथी' की तरह।

### (1514) मध्वादिभ्यश्च *86* (1305)

**मधु इत्येवमादिभ्यः शब्देभ्यो मतुप्प्रत्ययो भवति चातुरर्थिकः। अनद्यर्थ आरम्भः। मधुमान्। विसवान्। मधु। विस। स्थाणु। मुष्टि। इक्षु। वेणु। रम्य। ऋक्ष। कर्कन्धु।**

**शमी । किरीर । हिम । किशरा । शर्पणा । मरुत् । मरुव । दार्वाघाट । शर । इष्टका । तक्षशिला । शक्ति । आसन्दी । आसुति । शलाका । आमिधी । खडा । वेटा । मध्वादिः ।**

**अर्थ**—मधु आदि प्रातिपदिकों से चातुरर्थिक मतुप् प्रत्यय होता है। यह 'नदी' अर्थ से अतिरिक्त के लिए विधान है।

उदा० (1) मधुमान्
मध्वस्त्यस्मिन् देशे—मतुप्,
मधुमत् सु—विभक्तिकार्य।

(2) विसवान्—पूर्ववत् मतुप्।

शेष उदाहरण मूल में देखें।

### (1515) कुमुदनडवेतसेभ्यो ड्मतुप् *87* (1306)

**कुमुद, नड, वेतस इत्येतभ्यः शब्देभ्यो ड्मतुप् प्रत्ययो भवति चातुरर्थिकः । कुमुद्वान् । नड्वान् । वेतस्वान् । *महिषाच्चेति वक्तव्यम्* (म० भा०) । महिष्मान्नाम देशः ।**

**अर्थ**—कुमुद, नड और वेतस शब्दों से चातुरर्थिक ड्मतुप् प्रत्यय होता है। डकार, उकार तथा पकार की इत् संज्ञा होती है।

उदा० (1) कुमुद्वान्
कुमुदाः सन्त्यस्मिन्—प्रत्यय हुआ,
कुमुद् वत्—टेः, झयः, तसौ मत्वर्थे,
कुमुद्वान्—विभक्तिकार्य।

(2) नड्वान्
नड ड्मतुप्।

(3) वेतस्वान्
मतोर्वोऽयवादि०।

**महिषाच्चे०**—महिष शब्द से ड्मतुप् होता है—

(4) महिष्मान्
महिष ड्मतुप्—टिलोप, शेष पूर्ववत्।

### (1516) नडशादाड् ड्वलच् *88* (1307)

**नडशादशब्दाभ्यां ड्वलच् प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । नड्वलम् । शाद्वलम् ।**

**अर्थ**—नड और शाद प्रातिपदिकों से चातुरर्थिक ड्वलच् प्रत्यय होता है। यथासम्भव अर्थ का सम्बन्ध होता है। डकार तथा चकार की इत् संज्ञा होती है।

उदा० (1) नड्वलम्
नडाः सन्त्यस्मिन्—ड्वलच् हुआ,
नड्वल सु—टिलोप सु।

(2) शाद्वलम् (पूर्ववत्)।

### (1517) शिखाया वलच् *89* (1308)

**शिखाशब्दाद्वलच् प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । शिखावलं नाम नगरम् । मतुप्प्रकरणेऽपि शिखाया वलचं (5.2.113) वक्ष्यति, तद्देशार्थं वचनम् ।**

**अर्थ**—शिखा प्रातिपदिक से चातुरर्थिक वलच् प्रत्यय होता है। यहाँ यथासम्भव अर्थ का सम्बन्ध होता है।

उदा० (1) शिखावलम्
शिखा नाम कश्चिद् मनुष्यः, तेन निर्वृत्तं—वलच् हुआ,
शिखावल सु—विभक्तिकार्य।

मतुप् प्रकरण में भी 'शिखा' से 'वलच्' कहा जायेगा।

### (1518) उत्करादिभ्यश्छः *90* (1309)

**उत्कर इत्येवमादिभ्यश्छः प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । उत्करीयम् । शफरीयम् । उत्कर । सम्फल । शफर । पिप्पल । पिप्पलीमूल । अश्मन् । अर्क । पर्ण । सुपर्ण । खलाजिन । इडा । अग्नि । तिक । कितव । आतप । अनेक । पलाश । तृणव । पिचुक । अश्वत्थ । शकाक्षुद्र । भस्त्रा । विशाला । अवरोहित । गर्त्त । शाल । अन्य । जन्या । अजिन । मञ्च । चर्मन् । उत्क्रोश । शान्त । खदिर । शूर्पणाय । श्यावनाय । नैव । बक । नितान्त । वृक्ष । इन्द्रवृक्ष । आर्द्रवृक्ष । अर्जुनवृक्ष-उत्करादिः ।**

**अर्थ**—उत्करादि गणपठित प्रातिपदिकों से चातुरर्थिक 'छ' प्रत्यय होता है। यथासम्भव अर्थ का सम्बन्ध होता है।

उदा० (1) उत्करीयम्
उत्कर छ—ईयादेश,
उत्कर ईय—सु।

(2) शफरीयम्
शफर ईय—पूर्ववत्।

शेष उदाहरण मूल में देखें।

### (1519) नडादीनां कुक् च *91* (1310)

**नड इत्येवमादीनां कुगागमो भवति छश्च प्रत्ययश्चा-**

तुरर्थिकः। यथासम्भवमर्थसम्बन्धः। नडकीयम्। प्लक्षकीयम्। नड। प्लक्ष। बिल्व। वेणु। वेत्र। वेतस। तृण। इक्षु। काष्ठ। कपोत। *क्रुञ्चाया ह्रस्वत्वं च* (ग०सू० 92)। *तक्षन्नलोपश्च* (ग०सू० 93)।

अर्थ—नडादि प्रातिपदिकों से चातुरर्थिक 'छ' प्रत्यय होता है तथा प्रकृति को 'कुक्' आगम होता है।

उदा० (1) नडकीयम्
नड कुक् छ → नडकीय—ईयादेश, सु आदि।

(2) प्लक्षकीयम् (पूर्ववत्)।
शेष उदाहरण मूल में देखें।

क्रुञ्चाया—क्रुञ्चा शब्द को ह्रस्वादेश होता है—

(3) क्रुञ्चकीयम्
क्रुञ्चा क छ → क्रुञ्चकीय सु।

तक्षन्नलोपश्च—तक्षन् के 'न्' का लोप होता है—

(4) तक्षकीयम्
तक्षन् कुक् छ → तक्षकीयम्।

## (1520) शेषे *92* (1312)

शेष इत्यधिकारोऽयम्। यानित ऊर्ध्वं प्रत्ययाननुक्रमिष्यामः, शेषेऽर्थे ते वेदितव्याः। उक्तादन्यः शेषः। अपत्यादिभ्यश्चतुरर्थपर्यन्तेभ्योऽन्योऽर्थः शेषः (म०भा०), तस्येदंविशेषा ह्यपत्यसमूहादयः, तेषु घादयो मा भूवन्निति शेषाधिकारः क्रियते। किञ्च सर्वेषु जातादिषु घादयो यथा स्युरनन्तरेणैवार्थादेशेन सम्बन्धित्वेन कृतार्थता मा ज्ञायीति साकल्यार्थं शेषवचनम्। वक्ष्यति–'राष्ट्रावारपाराद् घखौ' (4.2.93)–राष्ट्रियः, अवारपारीणः। शेष इति लक्षणं चाधिकारश्च। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। दृषदि पिष्टाः दार्षदाः सक्तवः। उलूखले क्षुण्णः औलूखलो यावकः। अश्वैरुह्यते आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्ष इति।

अर्थ—यह अधिकार है। इससे आगे जो प्रत्यय कहा जायेगा, उसे 'शेष' अर्थ में जानना चाहिए। उपर्युक्त से अतिरिक्त को 'शेष' कहते हैं। अपत्यार्थ से लेकर चातुरर्थी पर्यन्त सभी अर्थों को छोड़कर अन्य को 'शेष' जानना चाहिए। उसके विशेष जो अपत्यसमूह आदि हैं, उनमें 'घ' आदि न हों। अतः शेषाधिकार कहा जा रहा है।

किञ्च०—जात आदि सभी अर्थों में 'घ' आदि सभी प्रत्यय हो जायँ, अव्यवहित अर्थों के आदेश से सम्बन्धितत्व रूप से कृतार्थता न मान ली जाय—इस प्रकार सभी के ज्ञान के लिये प्रकृत सूत्र है।

उदा० (1) राष्ट्रियः
(2) अवारपारीणः

'शेषे' यह लक्षण भी है और अधिकार भी। 'तस्य विकारः' (4.3.132) तक चलता है।

(3) चाक्षुषम्
चक्षुषा गृह्यते → चक्षुष् अण्—आदिवृद्धि,
चाक्षुष सु—विभक्तिकार्य।

(4) श्रावणः शब्दः
श्रवणेन गृह्यते—पूर्ववत्।

(5) दार्षदाः सक्तवः
दृषदि पिष्टाः—आदिवृद्धि।

(6) औलूखलो यावकः
उलूखले क्षुण्णः।

(7) आश्वो रथः
अश्वैरुह्यते।

(8) चातुरं शकटम्
चतुर्भिरुह्यते।

(9) चातुर्दशं रक्षः
चतुर्दशां दृश्यते।

## (1521) राष्ट्रावारपाराद् घखौ *93* (1313)

राष्ट्र, अवारपार इत्येताभ्यां यथासंख्यं घखावित्येतौ प्रत्ययौ भवतः। राष्ट्रियः। अवारपारीणः। *विगृहीतादपीष्यते* (म०भा०)। अवारीणः। पारीणः। *विपरीताच्च* (म०भा०)। पारावारीणः। प्रकृतिविशेषोपादानमात्रेण तावत्प्रत्यया विधीयन्ते। तेषां तु जातादयोऽर्थाः समर्थविभक्तयश्च पुरस्ताद्वक्ष्यन्ते।

अर्थ—शेष अर्थ में राष्ट्र और अवारपार प्रातिपदिकों से यथासंख्य करके 'घ' और 'ख' प्रत्यय होते हैं।

उदा० (1) राष्ट्रियः
राष्ट्र घ—इयादेश,
राष्ट्रिय सु—विभक्तिकार्य।

(2) अवारपारीणः

अवारपार ख—ईन आदेश,
अवारपारीन सु—णत्व, सु।

**विगृहीताद०**—'अवारपार' शब्द से विहित 'ख' प्रत्यय पृथक्-पृथक् पदों से भी होता है—

(3) अवारीणः
अवार ख—पूर्ववत्।

(4) पारीणः
पूर्ववत् णत्व आदि।

**विपरीताच्च**—'अवारपार' शब्द से विहित 'ख' प्रत्यय दोनों पदों के विपरीतक्रम की दशा में भी होता है—

(5) पारावारीणः
पारावार ख—पूर्ववत्।

**प्रकृति०**—यहाँ प्रकृति व प्रत्यय का निर्देश है, परन्तु अर्थ का निर्देश नहीं है। अतः 'तत्र जातः' से 'जातः' अर्थ का अध्याहार करने से उक्त प्रत्यय 'जातः' इस अर्थ में होते हैं। तब प्रकृति 'तत्र' इस सप्तम्यन्त पद के द्वारा बोध्य होने से सूत्रार्थ इस प्रकार होगा—सप्तम्यन्त राष्ट्र व अवारपार शब्दों से 'जातः' इस अर्थ में क्रमशः 'घ' और 'ख' होते हैं।

इसी प्रकार यहाँ 'तत्र भवः' तथा 'तत आगतः' आदि शैषिक अर्थों की सङ्गति कर लेनी चाहिये।

### (1522) ग्रामाद्यखञौ *94* (1314)

**ग्रामशब्दाद्य खञ् इत्येतौ प्रत्ययौ भवतः। ग्राम्यः। ग्रामीणः।**

**अर्थ**—'ग्राम' प्रातिपदिक से 'य' तथा 'खञ्' प्रत्यय पर्यायेण होते हैं।

**उदा०** (1) ग्राम्यः
ग्रामे जातः—'य' हुआ,
ग्राम्य सु—सु।

(2) ग्रामीणः
ग्राम खञ्—ईन आदेश,
ग्रामीण सु—णत्व।

### (1523) कत्त्र्यादिभ्यो ढकञ् *95* (1315)

**कत्त्रि इत्येवमादिभ्यो ढकञ् प्रत्ययो भवति। कात्त्रेयकः। औम्भेयकः। कत्त्रि। उम्भि। पुष्कर। पुष्कल। मोदन। कुम्भी। कुण्डिन। नगर। वञ्जी। भक्ति। माहिष्मती। चर्मण्वती। ग्राम। उख्या। *कुड्याया यलोपश्च* (ग०सू० 94)। कत्त्र्यादिः।**

**अर्थ**—कत्त्रि आदि प्रातिपदिकों से ढकञ् होता है। ञकार की इत्संज्ञा है।

**उदा०** (1) कात्त्रेयकः
कत्त्रि ढकञ् → कात्त् एयक—एयादेश,
कात्त्रेयक सु—विभक्तिकार्य।

(2) औम्भेयकः
उम्भि ढकञ्—आदिवृद्धि।
शेष उदाहरण मूल में देखें।

(3) ग्रामेयकः
ग्राम ढकञ्—पूर्ववत्।

### (1524) कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु *96* (1316)

**कुलकुक्षिग्रीवाशब्देभ्यो यथासंख्यं श्वन्, असि, अलङ्कार इत्येतेषु जातादिष्वर्थेषु ढकञ् प्रत्ययो भवति। कौलेयको भवति श्वा चेत्, कौलोऽन्यः। कौक्षेयको भवत्यसिश्चेत्, कौक्षोऽन्यः। ग्रैवेयको भवत्यलङ्कारश्चेत्, ग्रैवोऽन्यः।**

**अर्थ**—श्वन्, असि तथा अलंकार अभिधेय होने पर जात आदि अर्थों में यथासंख्य करके कुल, कुक्षि तथा ग्रीवा शब्दों से ढकञ् होता है।

**उदा०** (1) कौलेयकः श्वा
कुल ढकञ्—आदिवृद्धि, एयादेश,
कौलेयक सु—सु हुआ।

(2) कौलः
अन्यत्र 'अण्' हुआ।

(3) कौक्षेयकोऽसि
कुक्षि ढकञ्—पूर्ववत्।

(4) कौक्षः
अन्यत्र अण् हुआ।

(5) ग्रैवेयकोऽलङ्कारः
ग्रीवा ढकञ्—पूर्ववत्।

(6) ग्रैवः
अन्यत्र अण् हुआ।

## (1525) नद्यादिभ्यो ढक् *97* (1317)

नदी इत्येवमादिभ्यो ढक् प्रत्ययो भवति। नादेयम्। माहेयम्। पूर्वनगरीशब्दोऽत्र पठ्यते-पौर्वनगरेयम्। केचित्तु पूर्वनगिरीति पठन्ति, विच्छिद्य च प्रत्ययं कुर्वन्ति-पौरेयम्, वानेयम्, गैरेयमिति। तदुभयमपि दर्शनं प्रमाणम्। नदी। मही। वाराणसी। श्रावस्ती। कौशाम्बी। नवकौशाम्बी। काशफरी। खादिरी। पूर्वनगरी। पावा। मावा। साल्वा। दार्वा। दाल्वा। वासेनकी। वडवायावृषे (ग० सू० 95)।

**अर्थ**—नदी आदि प्रातिपदिकों से 'ढक्' प्रत्यय होता है।

उदा० (1) नादेयम्
नद्यां भवम् जातं वा—आदिवृद्धि, एयादेश,
नाद् एय सु—सु हुआ।

(2) माहेयम्
मही ढक्—पूर्ववत्।

पूर्वनगरी शब्द का यहाँ पाठ है।

(3) पौर्वनगरेयम्
पूर्ववत् एयादेश आदि।

कुछ विद्वान् इसके स्थान पर 'पूर्वनगिरि' ऐसा पाठ मानते हैं। तब—

(4) पौरेयम्
पुर् ढक् → पौर एय—विभक्तिकार्य।

(5) वानेयम्
वन ढक्—पूर्ववत्।

(6) गैरेयम्
गिरि ढक्।

शेष उदाहरण मूल में देखें।

## (1526) दक्षिणापश्चात्पुरसस्त्यक् *98* (1318)

दक्षिणा, पश्चात्, पुरस् इत्येतेभ्यस्त्यक् प्रत्ययो भवति शैषिकः। दाक्षिणात्यः। पाश्चात्त्यः। पौरस्त्यः।

**अर्थ**—दक्षिणा, पश्चात् तथा पुरस्—इन प्रातिपदिकों से शैषिक 'त्यक्' प्रत्यय होता है।

उदा० (1) दाक्षिणात्यः
दक्षिणा जातः (भवो वा)—'त्यक्' हुआ,
दाक्षिणात्य सु—आदिवृद्धि।

(2) पाश्चात्यः
पश्चात् त्यक्।

(3) पौरस्त्यः
पुरस् त्यक्—आदिवृद्धि।

## (1527) कापिश्याः ष्फक् *99* (1319)

कापिशीशब्दात् ष्फक् प्रत्ययो भवति शैषिकः। षकारो ङीषर्थः। कापिशायनं मधु। कापिशायनी द्राक्षा। *बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम्* (म० भा०)। बाह्लायनी। और्दायनी। पार्दायनी।

**अर्थ**—कापिशी प्रातिपदिक से शैषिक 'ष्फक्' प्रत्यय होता है। स्त्रीत्व में ङीष् करने के लिए 'ष्' अनुबन्ध जोड़ा गया है।

उदा० (1) कापिशायनं मधु
कापिश्यां भवम्—'ष्फक्' हुआ,
कापिशी आयन—आयनादेश, अन्त्यलोप,
कापिशायनम्—सु।

(2) कापिशायनी द्राक्षा
स्त्रीत्व में ङीष् हुआ।

**बाह्ल्युर्दि**—बाह्ली, उर्दि तथा पर्दि शब्दों से 'ष्फक्' होता है—

(3) बाह्लायनी
बाह्ली ष्फक्—पूर्ववत्।

(4) और्दायनी
उर्दि ष्फक्—पूर्ववत्। अचो रहाभ्यां द्वे।

(5) पार्दायनी
पर्दि ष्फक्—पूर्ववत्।

## (1528) रङ्कोरमनुष्येऽण् च *100* (1320)

रङ्कुशब्दादण् प्रत्ययो भवति चकारात्ष्फक्च शैषिकोऽमनुष्येऽभिधेये। राङ्कवो गौः। राङ्कवायणो गौः। अमनुष्य इति किम्? राङ्कवको मनुष्यः। ननु च रङ्कुशब्दः कच्छादिषु पठ्यते, तत्र च 'मनुष्यस्तत्स्थयोर्वुञ्' (4.2.134) इति मनुष्ये परत्वाद् वुञैव भवितव्यम्, कच्छादिपाठादमनुष्येऽणपि सिद्धः, किमिह मनुष्यप्रतिषेधेनाण्ग्रहणेन च? तदुच्यते-नैवायं मनुष्यप्रतिषेधः, किं तर्हि? नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते-तेन राङ्कवः कम्बल इति ष्फग् न भवति। विशेषविहितेन च ष्फकाऽणो बाधा मा भूदित्यण्ग्रहणमपि क्रियते।

**अर्थ**—यदि मनुष्य अभिधेय न हो तो रंकु प्रातिपदिक से अण् और ष्फक् शैषिक प्रत्यय होते हैं।

उदा० (1) राङ्कवः
रङ्कु अण्—आदिवृद्धि, ओर्गुणः।

(2) राङ्कवायणः—ष्फक् हुआ।

**अमनुष्य०** अर्थात् मनुष्य अभिधेय न हो तो अण् व ष्फक् होते हैं—

(3) राङ्कवकः (मनुष्यः)
वुञ् हुआ।

रंकु शब्द का कच्छादि शब्दों में पाठ है। वहाँ 'मनुष्यतत्स्थयो०' के द्वारा वुञ् होता है। कच्छादि में पाठ होने से 'मनुष्य' अर्थ वाच्य न होने पर अण् भी सिद्ध है। तब प्रकृत सूत्र के द्वारा 'मनुष्य' अर्थ वाच्य रहते अण् का निषेध क्यों है? कहा गया है। यहाँ 'मनुष्य' अर्थ का निषेध नहीं है। नञ् की तरह युक्त न्याय के द्वारा मनुष्यसदृश प्राणी के विषय में प्रतिपत्ति की जाती है। यथा—
राङ्कवः कम्बलः
यहाँ स्फक् नहीं हुआ।

विशेष रूप से विहित ष्फक् के द्वारा अण् का बाध न हो—इसलिए अण् का ग्रहण किया जाता है।

### (1529) द्युप्रागपागुदक्प्रतीचो यत् *101* (1321)

**दिव, प्राच्, अपाच्, उदच्, प्रत्यच् इत्येतेभ्यो यत्प्रत्ययो भवति शैषिकः। दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्। अव्ययात्तु कालवाचिनः परत्वात् ट्युट्युलौ भवतः–प्राक्तनम्।**

**अर्थ**—दिव्, प्राञ्च्, अपाञ्च्, उदञ्च् तथा प्रत्यञ्च्—इन प्रातिपदिकों से शैषिक 'यत्' प्रत्यय होता है।

उदा० (1) दिव्यम्
दिवि जातम्—'यत्' हुआ।
(2) प्राच्यम्—पूर्ववत् 'यत्'।
(3) अपाच्यम्।
अपाञ्च् 'यत्'।
(4) उदीच्यम् (पूर्ववत्)।
(5) प्रतीच्यम् (पूर्ववत्)।

कालवाची अव्यय से पर होने के कारण ट्यु तथ ट्युल् होते हैं—
(6) प्राक्तनम्
प्राञ्च् ट्यु—अनुनासिक लोप, युवोरनाकौ।

### (1530) कन्थायाष्ठक् *102* (1322)

**कन्थाशब्दाट्ठक् प्रत्ययो भवति शैषिकः। कान्थिकः।**

**अर्थ**—कन्था प्रातिपदिक से शैषिक ठक् प्रत्यय होता है।

उदा० (1) कान्थिकः
कन्था ठक् → कान्थ् इक—विभक्तिकार्य।

### (1531) वर्णौ वुक् *103* (1323)

**कन्थाया इत्येव। वर्णौ या कन्था तस्या वुक् प्रत्ययो भवति शैषिकः। ठकोऽपवादः। वर्णुर्नाम नदः, तत्समीपो देशो वर्णुः। तद्विषयार्थवाचिनः कन्थाशब्दादयं प्रत्ययः। तथाहि–जातं हिमवत्सु कान्थकम्।**

**अर्थ**—वर्णविषयक कन्था प्रातिपदिक से शैषिक वुक् होता है। यह ठक् का अपवाद है।

उदा० (1) कान्थकम्
कन्था वुक्—युवोरनाकौ।

### (1532) अव्ययात्त्यप् *104* (1324)

**अव्ययात् त्यप् प्रत्ययो भवति शैषिकः।**

**अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात् स्मृतः।**
**निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा॥**
**(म० भा०)**

**अमात्यः। इहत्यः। क्वत्यः। इतस्त्य। तत्रत्यः। यत्रत्यः। परिगणनं किम्? औपरिष्टः। पौरस्तः। पारस्तः। वृद्धात्तु छो भवति–आरातीयः। *त्यब्नेर्ध्रुवे* (म० भा०)। नियतं ध्रुवम्–नित्यम्। *निसो गते* (म० भा०)। निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादिः। *आविसश्छन्दसि* (संग्रहवार्त्तिक)। आविस् शब्दाच्छन्दसि त्यप् प्रत्ययो भवति। आविष्ट्यो वर्द्धते चारुरासु (ऋ० 1.95.5)। *अरण्याण्णो वक्तव्यः* (म० भा०)। आरण्याः सुमनसः। *दूरादेत्यः* (म० भा०)। दूरेत्यः पथिकः। *उत्तरादाहञ्* (म० भा०)। औत्तराहम्।**

**अर्थ**—अव्यय से शैषिक 'त्यप्' प्रत्यय होता है। निम्नलिखित कारिका में अव्यय शब्दों का परिगणन किया गया है—

अमा, इह, क्व, तसिप्रत्ययान्त तथा त्रप्रत्ययान्त अव्ययों से ही 'त्यप्' होता है। 'नि' से ध्रुव अर्थ में तथा 'निस्' से गति अर्थ में 'त्यप्' होता है।

**उदा॰ (1) अमात्यः**
अमा त्यप्।

**(2) इहत्यः**
इह त्यप्।

**(3) क्वत्यः**
क्व त्यप्।

**(4) इतस्त्यः**
इतस् त्यप्।

**(5) तत्रत्यः**
तत्र त्यप्।

**(6) यत्रत्यः**
यत्र त्यप्।

**(7) औपरिष्टः**
उपरिष्टात् अण्—कारिका में परिगणित न होने से 'त्यप्' नहीं हुआ, 'अव्ययानां भमात्रे टिलोपः॰' (वा॰),
औपरिष्ट् अ सु—विभक्तिकार्य।

**(8) पौरस्तः**
पुरस्तात् अण्—पूर्ववत्।

**(9) पारस्तः**
परस्तात् अण्।

**(10) आरातीय:**
आरात् छ—'वृद्धाच्छः' से 'छ' हुआ।

**त्यब्नेर्ध्रुवे**—नियत वस्तु वाच्य हो तो 'नि' से 'त्यप्' होता है—

**(11) नित्यः**
नि त्यप् सु।

**निसो गते**—गत अर्थ में 'निस्' से 'त्यप्' होता है—

**(12) निष्ट्यः**
निस् त्यप् सु—मूर्धन्यादेश, ष्टुना ष्टुः।

**आविसश्छन्दसि**—वेद में 'आविस्' से 'त्यप्' होता है—

**(13) आविष्ट्यः**
आविस् त्यप् सु।

**अरण्याण्णो॰**—अरण्य शब्द से 'ण' होता है—

**(14) आरण्याः सुमनसः**
अरण्य ण → आरण्य—आदिवृद्धि, चुटू,
आरण्य जस्—प्रथमा बहुवचन।

**दूरादेत्य**—दूर शब्द से 'एत्य' होता है—

**(15) दूरेत्यः**
दूर एत्य सु।

**उत्तरादाहञ्**—उत्तर शब्द से 'आहञ्' होता है—

**(16) औत्तराहम्**
उत्तर आहञ्—आदिवृद्धि, सु।

## (1533) ऐषमोह्यःश्वसोऽन्यतरस्याम् *105* (1326)

**ऐषमस्, ह्यस्, श्वस् इत्येतेभ्योऽन्यतरस्यां त्यप् प्रत्ययो भवति शैषिकः। ऐषमस्त्यम्, ऐषमस्तनम्। ह्यस्त्यम्, ह्यस्तनम्। श्वस्त्यम्, श्वस्तनम्। 'श्वसस्तुट् च' (4.3.15) इति ठञपि तृतीयो भवति-शौवस्तिकम्।**

**अर्थ**—ऐषमस्, ह्यस् तथा श्वस् प्रातिपदिकों से शैषिक 'त्यप्' प्रत्यय विकल्प से होता है।

**उदा॰ (1) ऐषमस्त्यम्**
ऐषमस् त्यप् सु।

**(2) ऐषमस्तनम्**
पक्ष में 'सायंचिरं॰' से ट्यु तथा ट्युल् प्रत्यय होते हैं।

**(3) ह्यस्त्यम्**
ह्यस् त्यप्।

**(4) ह्यस्तनम्**
पक्ष में 'ट्यु'।

**(5) श्वस्त्यम्**
त्यप् हुआ।

**(6) श्वस्तनम्**
ट्यु हुआ।

**(7) शौवस्तिकम्**
श्वस् ठञ्—'श्वसस्तुट् च' से 'ठञ्' प्रत्यय, तुट् आगम,
शौवस् त् इक → शौवस्तिकम्—सु।

## (1534) तीररूप्योत्तरपदादञ्ञौ *106* (1327)

**तीरोत्तरपदाद् रूप्योत्तरपदाच्च प्रातिपदिकाद्यथासंख्यमञ्**

ञ इत्येतौ प्रत्ययौ भवतः शैषिकौ। अणोऽपवादौ। काकतीरम्। पाल्वलतीरम्। रूप्योत्तरपदात्–वार्करूप्यम्, शैवरूप्यम्। तीररूप्यान्तादिति नोक्तम्, बहुच्प्रत्ययपूर्वान् मा भूदिति–बाहुरूप्यम्। अणेव भवति।

**अर्थ**—तीर तथा रूप्य शब्दों के उत्तरपद रहते प्रातिपदिकसंज्ञक शब्द से यथासंख्य करके 'अञ्' व 'ञ' शैषिक प्रत्यय होते हैं। ये अण् के अपवाद हैं।

उदा० (1) काकतीरम्
काकतीरे भवम् → काकतीर अञ्—सु आदि।

(2) पाल्वलतीरम्
पल्वलतीर अञ्।

(3) वार्करूप्यम्
वृकरूप्य ञ—आदिवृद्धि, सु।

(4) शैवरूप्यम्
शिवरूप्य ञ—पूर्ववत्।

**तीररूप्या०** अर्थात् तीर तथा रूप्य शब्दों के उत्तर पद रहते पूर्वोक्त प्रत्यय होते हैं। तब पूर्वपद में 'बहुच्' प्रत्यय के रहते ये प्रत्यय नहीं होते—

(5) बाहुरूप्यम्
बहुरूप्य अण्—आदिवृद्धि।

### (1535) दिक्पूर्वपदादसंज्ञायां ञः *107* (1328)

**असंज्ञायामिति प्रकृतिविशेषणम्। दिक्पूर्वपदात्प्रातिपदिकादसंज्ञाविषयाद् ञः प्रत्ययो भवति शैषिकः। अणोऽपवादः। पौर्वशालः। दाक्षिणशालः। आपरशालः। असंज्ञायामिति किम्? पूर्वैषुकामशमः, अपरैषुकामशमः। 'दिक्संख्ये संज्ञायाम्' (2.1.50) इति समासः, 'प्राचां ग्रामनगराणाम्' (7.3.14) इत्युत्तरपदवृद्धिः। पदग्रहणं स्वरूपविधिनिरासार्थम्।**

**अर्थ**—संज्ञा के विषय को छोड़कर अन्यत्र दिशावाची शब्द के पूर्वपद में रहते प्रातिपदिक से शैषिक 'ञ' होता है। यह अण् का अपवाद है।

उदा० (1) पौर्वशालः
पूर्वस्यां शालायां भवः—समास हुआ,
पूर्वशाला ञ—आदिवृद्धि, सु।

(2) दाक्षिणशालः
दक्षिणशाला ञ।

(3) आपरशालः
अपरशाला ञ।

**असञ्ज्ञा०** अर्थात् संज्ञा के विषय को छोड़कर 'ञ' होता है—

(4) पूर्वेषुकामशमः
'दिक्सङ्ख्ये सञ्ज्ञायाम्' से समास हुआ, 'ञ' नहीं हुआ। 'प्राचां ग्रामनगराणाम्' से उत्तरपद वृद्धि हुई। स्वरूपविधि के निरास के लिए 'पद' का ग्रहण है।

### (1536) मद्रेभ्योऽञ् *108* (1329)

**दिक्पूर्वपदादित्येव। दिक्पूर्वपदान्मद्रशब्दादञ् प्रत्ययो भवति शैषिकः। पौर्वमद्रः। आपरमद्रः। 'दिशो मद्राणाम्' (7.3.13) इति पर्युदासादादिवृद्धिरेव।**

**अर्थ**—दिशावाची शब्द के पूर्व पद में रहते तथा मद्र शब्द के उत्तर पद में रहते प्रातिपदिकसंज्ञक शब्द से शैषिक 'अञ्' होता है।

उदा० (1) पौर्वमद्रः
पूर्वेषु मद्रेषु भवः → पूर्वमद्र अञ्—आदिवृद्धि,
पौर्वमद्रः—सु।

(2) आपरमद्रः (पूर्ववत्)।

'दिशो मद्राणाम्' से पर्युदास-निषेध के कारण आदिवृद्धि होती है।

### (1537) उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् *109* (1330)

**दिग्ग्रहणं निवृत्तम्। उदीच्यग्रामवाचिनः प्रातिपदिकाद् बह्वचोऽन्तोदात्ताद् अञ् प्रत्ययो भवति शैषिकः। अणोऽपवादः। शैवपुरम्। माण्डवपुरम्। उदीच्यग्रामादिति किम्? माथुरम्। बह्वच इति किम्? ध्वजी, ध्वाजम्। अन्तोदात्तादिति किम्? शार्करीधानम्। शर्करीधानशब्दे लित्स्वरेण धानशब्द उदात्तः।**

**अर्थ**—अन्तोदात्त, अनेकाच्, उदीच्य ग्रामवाची प्रातिपदिक से शैषिक अञ् होता है। यह अण् का अपवाद है।

उदा० (1) शैवपुरम्
शिवपुरे भवम्—अञ्, आदिवृद्धि।

(2) माण्डवपुरम् (पूर्ववत्)।

उदीच्य—अर्थात् उदीच्य ग्रामवाची शब्द से ही 'अञ्' होता है—

(3) माथुरम्
मथुरायां भवम्—अञ् नहीं हुआ, अण् हुआ।

बह्वच अर्थात् अनेकाच् प्रातिपदिक से ही 'अञ्' होता है—

(4) ध्वाजम्
ध्वजी अण्—अञ् नहीं हुआ।

अन्तोदात्ता० अर्थात् अन्तोदात्त प्रातिपदिक से ही 'अञ्' होता है—

(5) शार्करीधानम्
शर्करीधान अण्—अञ् नहीं हुआ।
शर्करीधान शब्द में लित् स्वर से धा शब्द उदात्त होता है।

## (1538) प्रस्थोत्तरपदपलद्यादिकोपधादण् *110* (1331)

प्रस्थोत्तरपदात् पलद्यादिभ्यः ककारोपधाच्च प्रातिपदिकादण् प्रत्ययो भवति शैषिकः। उदीच्यग्रामलक्षणस्याञोऽपवादः। माद्रीप्रस्थः। माहकीप्रस्थः। पलद्यादिभ्यः- पालदः, पारिषदः। ककारोपधात्-नैलीनकः, चैयातकः। पलद्यादिषु यो वाहीकग्रामस्ततष्ठञ्ञिठयोरपवादः। यथा- गौष्ठी, नैतकीति। गोमतीशब्दः पठ्यते, ततो 'रोपधेतोः प्राचाम्' (4.2.123) इति वुञोऽपवादः। वाहीकशब्दः कोपधोऽपि पुनः पठ्यते, परं छं (4.2.114) बाधितुम्। अण्ग्रहणं बाधकबाधनार्थम्। पलदी। परिषत्। यकृल्लोमन्। रोमक। कालकूट। पटच्चर। वाहीक। कलकीट। मलकीट। कमलकीट। कमलभिदा। कमलकीर। बाहुकीट। नैतकी। परिखा। शूरसेन। गोमती। उदयान-पलद्यादिः।

अर्थ—'प्रस्थ' शब्द है उत्तरपद में जिसके, ऐसे प्रातिपदिक से, पलद्यादि शब्दों से तथा ककार है उपधा में जिसके, ऐसे प्रातिपदिक से शैषिक 'अण्' प्रत्यय होता है। यह उदीच्य ग्रामलक्षण अञ् का अपवाद है।

उदा० (क) प्रस्थोत्तरपदात्—
(1) माद्रीप्रस्थः
माद्रीप्रस्थे भवः—अण्, सु आदि।

(2) माहकीप्रस्थः (पूर्ववत्)।

(ख) पलद्यादिभ्यः—
(3) पालदः
पलदी अण्—आदिवृद्धि।

(4) पारिषदः
परिषद् अण्—पूर्ववत्।

(ग) ककारोपधात्—
(5) नैलीनकः
निलीनक अण्।

(6) चैयातकः
चियातक अण्।
पलद्यादि में जो वाहीक ग्राम है, उससे ठञ् तथा ञिठ का अपवाद है।

(7) गौष्ठी
गोष्ठ अण्—स्त्रीत्व में टिड्ढाऽण्०' से ङीप्।

गोमती०—गोमती शब्द का पाठ मिलता है। उससे 'रोपधेतोः प्राचाम्' से प्राप्त वुञ् का यह अपवाद है। वाहीक शब्द का कोपध में पाठ भी है, परकार्य 'छ' के बाध के लिए। बाधक के बाध के लिए अण् का ग्रहण किया गया है।

शेष उदाहरण मूल में देखें।

## (1539) कण्वादिभ्यो गोत्रे *111* (1332)

गोत्रमिह न प्रत्ययार्थो न च प्रकृतिविशेषणम्। तर्ह्येवं सम्बध्यते-कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्य एवाण् प्रत्ययो भवति शैषिकः। छस्यापवादः। काण्वाश्छात्राः। गौकक्षाः।

अर्थ—यहाँ गोत्र शब्द न तो प्रत्ययार्थ है, न ही प्रकृति का विशेषण है। तब भी इसका सम्बन्ध है। कण्वादि गणपठित शब्दों से गोत्रापत्य में विहित जो प्रत्यय, तदन्त प्रातिपदिक से शैषिक अण् होता है। यह 'छ' का अपवाद है।

उदा० (1) काण्वाश्छात्राः
कण्व यञ्—'गर्गादिभ्यो यञ्',
काण्व्य अण्—प्रकृत सूत्र से,
काण्व्य् अ—अन्त्य लोप, 'आपत्यस्य च०' से यकारलोप,
काण्व जस्—प्रथमा बहुवचन।

(2) गौकक्षाः (पूर्ववत्)।

## (1540) इञश्च *112* (1333)

गोत्र इत्येव। गोत्रे य इञ् विहितस्तदन्तात्प्रातिपदिकादण्

**प्रत्ययो भवति शैषिकः । छस्यापवादः । दाक्षाः । प्लाक्षाः । माहकाः । गोत्र इत्येव-सौतङ्गमेरिदं सौतङ्गमीयम् ।**

**अर्थ**—गोत्रापत्य अर्थ में विहित जो इञ् प्रत्यय, तदन्त प्रातिपदिक से शैषिक 'अण्' होता है। यह 'छ' का अपवाद है।

उदा० (1) दाक्षाः
दक्षस्य गोत्राऽपत्यम्—'अत इञ्' से,
दाक्षेश्छात्राः—अण्,
दाक्ष् अ जस्—पूर्ववत्।

(2) प्लाक्षाः
प्लाक्षि अण्—पूर्ववत्।

(3) माहकाः (पूर्ववत्)।

गोत्र—अर्थात् गोत्रप्रत्ययान्त से ही 'अण्' होता है—

(4) सौतङ्गमीयम्
सुतङ्गम इञ् → सौतङ्गमिः
सौतङ्गमेरिदम्—अण् नहीं हुआ, 'छ' हुआ,
सौतङ्गम् ईय सु—ईयादेश।

## (1541) न द्व्यचः प्राच्यभरतेषु *113* (1334)

**द्व्यचः प्रातिपदिकात्प्राच्यभरतगोत्रादिञन्तादण् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। पैङ्गीयाः। प्रौष्ठीयाः। चैदीयाः। पौष्कीयाः। काशीयाः। पाशीयाः। द्व्यच इति किम्? पान्नागाराः। प्राच्यभरतेष्विति किम्? दाक्षाः। काशीया इति कथमुदाहृतम्, यावता काश्यादिभ्यष्ठञ्ञिठाभ्यां (4.2.116) भवितव्यम्? नैतदस्ति। देशवाचिनः काशिशब्दस्य तत्र ग्रहणम्, चैदिशब्देन साहचर्यात्। गोत्रात्तु वृद्धाच्छ (4.2.114) एव भवति। ज्ञापकादन्यत्र प्राच्यग्रहणेन भरतग्रहणं न भवतीति स्वशब्देन भरतानामुपादानं कृतम्।**

**अर्थ**—दो अच् वाले प्रातिपदिक, प्राच्यभरत गोत्रवाची तथा इञ् प्रत्ययान्त प्रातिपदिक से शैषिक 'अण्' का निषेध होता है। पूर्व सूत्र के द्वारा प्राप्त अण् का निषेध किया जाता है।

उदा० (1) चैदीयाः
चेदस्याऽपत्यम् → चैदिः
चैदेश्छात्राः—वृद्धाच्छः।

(2) पौष्टकीयाः (पूर्ववत्)।

(3) काशीयाः (पूर्ववत्)।

**द्व्यचः**—अर्थात् दो अच् वाले प्रातिपदिक से प्रत्यय का निषेध होता है—

(4) पान्नागाराः
पान्नागारि अण्—निषेध नहीं हुआ।

**प्राच्यभरत** अर्थात् प्राच्यभरत गोत्रवाची प्रातिपदिक से प्रत्यय का निषेध होता है—

(5) दाक्षाः
दाक्षि अण्—जस् में रूप बनता है।

**काशीया**—काश्यादि से ठञ् और ञिठ् होने चाहिए। अतः काशीयाः उदाहरण कैसे है? ऐसा नहीं है। चैदि शब्द के साहचर्य से देशवाची काशि शब्द का भी वहाँ ग्रहण है। गोत्र से तो 'वृद्धाच्छः' से 'छ' ही होता है। ज्ञापक से अन्यत्र प्राच्य के ग्रहण करने से भरत का ग्रहण नहीं होता—इस प्रकार 'स्व' शब्द के द्वारा भरतों का भी उपादान किया गया है।

## (1542) वृद्धाच्छः *114* (1337)

**गोत्र इति नानुवर्त्तते। सामान्येन विधानम्। वृद्धात्प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। गार्गीयः। वात्सीयः। शालीयः। मालीयः। अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधींस्तु (4.2.104,106, 109, 110) परत्वाद् बाधते।**

**अर्थ**—'गोत्र' पद का अनुवर्तन नहीं है। सामान्य रूप से विधान है। वृद्धसंज्ञक प्रातिपदिक से शैषिक 'छ' प्रत्यय होता है। यह अण् का अपवाद है।

उदा० (1) गार्गीयः
गार्गी छ—'वृद्धिर्यस्याचामा०' से वृद्धसंज्ञा,
गार्ग् ईय सु—ईयादेश।

(2) वात्सीयः (पूर्ववत्)।

(3) शालीयः (पूर्ववत्)।

पर होने के कारण यह अव्यय, तीररूप्योत्तरपद, उदीच्यग्राम तथा कोपध—इन सभी विधियों का बाध करता है।

## (1543) भवतष्ठक्छसौ *115* (1339)

**वृद्धादित्येव। भवच्छब्दाद् वृद्धात् ठक्छसौ इत्येतौ प्रत्ययौ भवतः शैषिकौ। छस्यापवादौ। सकारः पदसंज्ञार्थः। भवतस्त्यदादित्वाद् वृद्धसंज्ञा। भावत्कः। भवदीयः। अवृद्धात्तु भवतः शतुरणेव भवति-भावतः।**

**अर्थ**—वृद्धसंज्ञक 'भवत्' प्रातिपदिक से शैषिक ठक् व छस् प्रत्यय होते हैं। यह 'छ' का अपवाद है। 'स्' अनुबन्ध पद-संज्ञा के लिए है। 'भवत्' की त्यदादि गण में पाठ होने से वृद्ध-संज्ञा होती है।

**उदा०** (1) भावत्कः
भवत् ठक्—'इसुसुक्तान्ता०' से 'क',
भावत् क सु—किति च।

(2) भवदीयः
भवत् छस्—ईयादेश।

शतृ प्रत्ययान्त 'भवत्' शब्द जो वृद्धसंज्ञक नहीं है, से 'अण्' ही होता है। यथा—

(3) भावतः
भवत् अण्—आदिवृद्धि।

## (1544) काश्यादिभ्यष्ठञ्ञिठौ *116* (1340)

**काशि इत्येवमादिभ्यष्ठञ् ञिठ इत्येतौ प्रत्ययौ भवतः शैषिकौ। इकार उच्चारणार्थः। ञकार एवोभयत्र विपर्यस्तदेशोऽनुबन्धः। स्त्रीप्रत्यये विशेषः। काशिकी, काशिका। बैदिकी, बैदिका। वृद्धादित्यत्रानुवर्त्तते, ये त्ववृद्धाः पठ्यन्ते वचनप्रामाण्यात्तेभ्यः प्रत्ययविधिः। देवदत्तशब्दः पठ्यते, तस्य 'एङ् प्राचां देशे' (1.1.75) इति वृद्धसंज्ञा–दैवदत्तिकः। वाहीकग्रामस्य तु नास्ति वृद्धसंज्ञा–दैवदत्तः। कथं भाष्य उदाहृतम् 'वा नामधेयस्य वृद्धसंज्ञा वेदितव्या, देवदत्तीया दैवदत्ताः' इति, यावता वृद्धसंज्ञापक्षे काश्यादित्वाट्ठञ्ञिठाभ्यां भवितव्यम्? तत्रैवं वर्णयन्ति 'वा नामधेयस्य' इति व्यवस्थितविभाषेयम्, सा छे कर्त्तव्ये भवति ठञ्ञिठयोर्न भवतीति। काशि। चेदि। संज्ञा। संवाह। अच्युत। मोहमान। शकुलाद। हस्तिकर्षू। कुदामन्। हिरण्य। करण। गोधाशन। भौरिकि। भौलिङ्गि। अरिन्दम। सर्वमित्र। देवदत्त। साधुमित्र। दासमित्र। दासग्राम। सौधावतान। युवराज। उपराज। सिन्धुमित्र। देवराज। *आपदादिपूर्वपदात्कालात्* (ग०सू० 96)। आपत्कालिकी, आपत्कालिका। और्ध्वकालिकी, और्ध्व-कालिका। तात्कालिकी, तात्कालिका।**

**अर्थ**—काशी आदि प्रातिपदिकों से शैषिक ठञ् तथा ञिठ् प्रत्यय पर्यायेण होते हैं। इकार उच्चारणार्थ है। 'ञ्' अनुबन्ध दोनों प्रकार से समान प्रयोजन सिद्ध करता है, परन्तु इसका विपर्यस्त प्रयोग स्त्री प्रत्यय में विशेष है। ('ठञ्' प्रत्ययान्त से 'ङीप्' होता है।)

**उदा०** (1) काशिकी
काश्यां भवा → काशि ठञ्—ठस्येकः,
काशिकी—ङीप्, सु।

(2) काशिका
ञिठ् हुआ, टाप् हुआ।

(3) वैदिकी
पूर्ववत् ङीप् आदि।

(4) वैदिका
ञिठ्, टाप्।

**वृद्धादि०**—'वृद्धात्' का यहाँ अनुवर्त्तन है। जो यहाँ अवृद्धसंज्ञक पठित हैं, वचनप्रामाण्य से उनसे प्रत्ययविधि होती है। यहाँ 'देवदत्त' शब्द का पाठ है। 'एङ् प्राचां देशे' से वृद्धसंज्ञा होती है।

(5) दैवदत्तिकः
देवदत्त ठञ्।
वाहीकग्राम की वृद्धसंज्ञा नहीं होती है।

(6) दैवदत्तः
अण् हुआ।

**कथं**—भाष्य में 'वा नामधेयस्य वृद्धसंज्ञा वेदितव्या देवदत्तीया दैवदत्ता'—इस प्रकार उदाहरण कैसे दिया गया है। जबकि वृद्धसंज्ञापक्ष में काश्यादि में पाठ होने से ठञ् व ञिठ् होने चाहिए। वहाँ पर ही कहा जा रहा है—वा नामधेयस्य०। यह व्यवस्थित विभाषा है। 'छ' करने पर वह होती है। ठञ् व ञिठ् में नहीं होती है।

शेष उदाहरण मूल में देखें।

**आपदादि०**—आपद् आदि शब्द है पूर्वपद में जिसके तथा काल शब्द है अन्त में जिसके, ऐसे प्रातिपदिक से ठञ् और ञिठ् प्रत्यय होते हैं—

(7) आपत्कालिकी
आपत् काल ठञ् ङीप्—विभक्तिकार्य।

(8) तात्कालिका
तत्काल ञिठ्—आदिवृद्धि, टाप्, सु।

## (1545) वाहीकग्रामेभ्यश्च *117* (1341)

**वृद्धादित्येव। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ**

**प्रत्ययौ भवतः शैषिकौ। छस्यापवादौ। शाकलिकी, शाकलिका। मान्थविकी, मान्थविका।**

अर्थ—वृद्धसंज्ञक वाहीक ग्रामवाची प्रातिपदिकों से ठञ् और ञिठ् शैषिक प्रत्यय होते हैं। यह 'छ' का अपवाद है।

उदा० (1) शाकलिकी
शाकल ठञ् ङीप्।

(2) शाकलिका
ञिठ् व टाप्।

(3) मान्थविकी
ठञ् व ङीप्।

(4) मान्थविका
ञिठ्, टाप्, सु।

## (1546) विभाषोशीनरेषु *118* (1342)

**वृद्धादिति वर्तते, वाहीकग्रामेभ्य इति च। उशीनरेषु ये वाहीकग्रामास्तद्वाचिभ्यो वृद्धेभ्यः प्रातिपदिकेभ्यो विभाषा ठञ्ञिठौ प्रत्ययौ भवतः। आह्वजालिकी, आह्वजालिका, आह्वजालीया। सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया।**

अर्थ—उशीनर देश में वाहीक ग्रामवाची वृद्धसंज्ञक प्रातिपदिक से विकल्प से ठञ् व ञिठ् प्रत्यय होते हैं, शैषिक अर्थों में। पक्ष में 'वृद्धाच्छः' से 'छ' होता है।

उदा० (1) आह्वजालिकी
ठञ् व ङीप्।

(2) आह्वजालीया
पक्ष में 'छ', टाप्।

(3) आह्वजालिका
ञिठ्, टाप्।

(4) सौदर्शनिकी
सुदर्शन ठञ् ङीप्।

(5) सौदर्शनिका
ञिठ्, टाप्।

(6) सौदर्शनीया
सुदर्शन छ—पक्ष में 'छ', ईयादेश, स्त्रीत्व में 'टाप्' हुआ है।

## (1547) ओर्देशे ठञ् *119* (1343)

**वृद्धादिति नानुवर्त्तते, उत्तरसूत्रे पुनर्वृद्धग्रहणात्। उवर्णान्ताद् देशवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः। नैषादकर्षुकः। शाबरजम्बुकः। देश इति किम्? पटोश्छात्राः पाटवाः। ठञ्ञिठयोः प्रकरणे ठञः केवलस्यानुवृत्तिर्न लभ्यत इति ठञ्ग्रहणं कृतम्।**

अर्थ—'वृद्धात्' की अनुवृत्ति नहीं है। उत्तर सूत्र में पुनः 'वृद्ध' शब्द का ग्रहण किया गया है। उवर्णान्त देशवाची प्रातिपदिक से ठञ् प्रत्यय होता है, शैषिक अर्थों में।

उदा० (1) नैषादकर्षुकः
निषादकर्षु ठञ्—इसुसुक्तान्ता०,
नैषादकर्षुकः—आदिवृद्धि, सु।

(2) शाबरजम्बुकः
शबरजम्बु ठञ्—पूर्ववत्।

देश इति अर्थात् देशवाची प्रातिपदिक से 'ठञ्' होता है—

(3) पाटवाः
पटोश्छात्राः—यहाँ 'ठञ्' नहीं हुआ।

पूर्वशास्त्र से ठञ् और ञिठ् दोनों का अनुवर्त्तन हो रहा है। अतः (ञिठ् की निवृत्ति के लिए) पुनः ठञ् का पाठ किया गया है।

## (1548) वृद्धात् प्राचाम् *120* (1344)

**ओर्देश इत्येव। उवर्णान्ताद् वृद्धात् प्राग्देशवाचिनः प्रातिपदिकाट्ठञ् प्रत्ययो भवति शैषिकः। आढकजम्बुकः। शाकजम्बुकः। नापितवास्तुकः (म० भा०)। पूर्वेणैव ठञि सिद्धे नियमार्थं वचनम्-वृद्धादेव प्राचामवृद्धान्न भवतीति। मल्लवास्तु, माल्लवास्तवः।**

अर्थ—'ओर्देशे' का अनुवर्त्तन है। वृद्धसंज्ञक, उवर्णान्त प्राग्देशवाची प्रातिपदिक से 'ठञ्' प्रत्यय होता है, शैषिक अर्थों में।

उदा० (1) आढकजम्बुकः (पूर्ववत्)।
(2) शाकजम्बुकः (पूर्ववत्)।
(3) नापितवास्तुकः (पूर्ववत्)।

पूर्वसूत्र के द्वारा यहाँ सिद्ध ही था। तब नियम करने के लिए यह विधान किया जा रहा है कि वृद्धसंज्ञक प्राग्देशवाची से ही ठञ् होता है; अवृद्धसंज्ञक से नहीं होता। यथा—

(4) माल्लवास्तवः
मल्लवास्तु अण्—ठञ् नहीं हुआ।

(1549) धन्वयोपधाद् वुञ् *121* (1345)

**वृद्धादिति वर्तते, देश इति च। धन्ववाचिनो यकारोपधाच्च देशाभिधायिनो वृद्धात् प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। धन्वशब्दो मरुदेशवचनः। पारेधन्वकः। ऐरावतकः। योपधात्–साङ्काश्यकः (म० भा०), काम्पिल्यकः।**

**अर्थ**—वृद्धात्, देशे—इन पदों का अनुवर्त्तन है। देशाभिधायी धन्ववाची तथा योपध वृद्धसंज्ञक प्रातिपदिक से शैषिक अर्थों में 'वुञ्' होता है।

उदा० (1) पारेधन्वकः
पारेधन्व वुञ्—युवोरनाकौ।
(2) ऐरावतकः (पूर्ववत्)।
(3) साङ्काश्यकः
साङ्काश्य वुञ्।
(4) काम्पिल्यकः (पूर्ववत्)।

(1550) प्रस्थपुरवहान्ताच्च *122* (1346)

**वृद्धादिति वर्त्तते, देश इति च। अन्तशब्दः प्रत्येकमभिसम्बद्ध्यते। प्रस्थ, पुर, वह–इत्येवमन्ताद् देशवाचिनः प्रातिपदिकाद् वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। मालाप्रस्थकः। नान्दीपुरकः (म० भा०)। कान्तीपुरकः। पैलुवहकः। फाल्गुनीवहकः। पुरान्तो रोपधः, तत उत्तरसूत्रेणैव सिद्धमप्रागर्थमिह ग्रहणम्।**

**अर्थ**—वृद्धात्, देशे—इनका अनुवर्त्तन है। 'अन्त' शब्द का प्रत्येक के साथ सम्बन्ध है। प्रस्थ, पुर तथा वह शब्द हैं अन्त में जिसके, ऐसे देशवाची, वृद्धसंज्ञक प्रातिपदिक से शैषिक अर्थों में वुञ् होता है। यह 'छ' का अपवाद है।

उदा० (1) मालाप्रस्थकः
मालाप्रस्थ वुञ्।
(2) नान्दीपुरकः
नन्दीपुर वुञ्।
(3) पैलुवहकः
पीलुवह वुञ्।
(4) फाल्गुनीवहकः
फल्गुनीवह वुञ्।

'पुर' शब्द जिसके अन्त में है, उस प्रातिपदिक से रोपध होने से अगले सूत्र के द्वारा ही प्रत्यय सिद्ध है। तब यहाँ प्राग्देशीय से अतिरिक्त के लिए 'पुर' का ग्रहण किया गया है।

(1551) रोपधेतोः प्राचाम् *123* (1347)

**वृद्धादिति वर्त्तते, देश इति च। तद्विशेषणं प्राग्ग्रहणम्। रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। पाटलिपुत्रकाः। ऐकचक्रकाः। ईतः खल्वपि–काकन्दी, काकन्दकः, माकन्दी, माकन्दकः। प्राचामिमि किम्? दात्तामित्रीयः। तपरकरणं विस्पष्टार्थम्।**

**अर्थ**—वृद्धात्, देशे—इनका अनुवर्त्तन है। उसके विशेषण के रूप में 'प्राक्' का ग्रहण किया गया है। प्राग्देशवाची, रेफ उपधा वाले तथा ईकारान्त वृद्धसंज्ञक प्रातिपदिक से शैषिक अर्थों में 'वुञ्' होता है। यह 'छ' का अपवाद है।

उदा० (1) पाटलिपुत्रकाः
पाटलिपुत्र वुञ्—प्रथमा बहुवचन।
(2) ऐकचक्रकाः
एकचक्रका वुञ्—पूर्ववत्।
(3) काकन्दकः
काकन्दी वुञ्।
(4) माकन्दकः
माकन्दी वुञ्।

प्राचामि० अर्थात् प्राग्देशीय प्रातिपदिक से 'वुञ्' होता है—
(5) दात्तामित्रीयः
दत्तामित्र छ—वुञ् नहीं हुआ, 'छ' हुआ।
'इतः' में तपरकरण स्पष्टता के लिए है।

(1552) जनपदतदवध्योश्च *124* (1348)

**वृद्धादिति वर्त्तते, देश इति च। तद्विशेषणं जनपदतदवधी। वृद्धाज्जनपदवाचिनस्तदवधिवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। आभिसारकः। आदर्शकः। जनपदावधेः खल्वपि–औपुष्टकः, श्यामायनकः। तदवधेरपि जनपद एव गृह्यते, न ग्रामः। किमर्थं तर्हि ग्रहणम्? बाधकबाधनार्थम्। गर्त्तोत्तरपदाच्छं बाधित्वा वुञेव जनपदावधेर्भवति–त्रैगर्त्तकः।**

**अर्थ**—वृद्धात्, देशे—इनकी अनुवृत्ति है। विशेषण के रूप में जनपद और तदवधि है। वृद्धसंज्ञक जनपदवाची तथा जनपद अवधि को कहने वाले प्रातिपदिकों से शैषिक अर्थों में वुञ् होता है। यह 'छ' का अपवाद है।

उदा० (1) आभिसारकः
अभिसार वुञ्।

(2) आदर्शकः
आदर्श वुञ्।

(3) औपुष्टकः (पूर्ववत्)।

(4) श्यामायनकः
श्यामायन वुञ्।

तदवधि०—तदवधि से जनपद का ही ग्रहण होता है, ग्राम का नहीं। तब किसलिए ग्रहण किया गया है। (समा०) यह बाधक के बाध के लिए है। 'गर्त्त' शब्द है उत्तरपद में जिसके, ऐसे प्रातिपदिक से प्राप्त 'छ' का बाध करके जनपदावधि से वुञ् ही होता है।

(5) त्रैगर्त्तकः
त्रिगर्त्त वुञ्—आदिवृद्धि, युवोरनाकौ,
त्रैगर्त्तकः—सु।

### (1553) अवृद्धादपि बहुवचनविषयात् *125* (1349)

**जनपदतदवध्योरित्येव। अवृद्धाद् वृद्धाच्च जनपदात्तदवधिवाचिनश्च बहुवचनविषयात्प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। अण्छयोरपवादः। अवृद्धाज्जनपदात्तावत्–अङ्गाः, बङ्गाः, कलिङ्गाः, आङ्गकः, बाङ्गकः, कालिङ्गकः। अवृद्धाज्जनपदावधेः–अजमीढाः, अजक्रन्दाः, आजमीढकः, आजक्रन्दकः। वृद्धाज्जनपदात्–दार्वाः, जाम्ब्वाः, दार्वकः, जाम्ब्वकः। वृद्धाज्जनपदावधेः–कालञ्जराः, वैकुलिशाः, कालञ्जरकः, वैकुलिशकः। विषयग्रहणमनन्यत्र भावार्थम्, जनपदैकशेषबहुत्वे मा भूत्–वर्त्तन्यः, वार्त्तनः। अपिग्रहणं किम्, यावता वृद्धात्पूर्वेणैव सिद्धम्? तक्रकौण्डिन्यन्यायेन बाधा मा विज्ञायीति समुच्चीयते।**

अर्थ—जनपद व तदवधि—इनका अनुवर्त्तन नहीं है। वृद्धसंज्ञक तथा अवृद्ध—दोनों प्रकार के जनपदवाची व जनपदावधिवाची बहुवचनविषयक प्रातिपदिक से शैषिक अर्थों में 'वुञ्' होता है। यह अण् तथा छ प्रत्ययों का अपवाद है।

उदा० (1) आङ्गकः
अङ्ग वुञ्—आदिवृद्धि, युवोरनाकौ,
आङ्गक सु—सु हुआ।

(2) बाङ्गकः
बङ्ग वुञ्—पूर्ववत्।

(3) कालिङ्गकः
कलिङ्ग वुञ्।

(4) आजमीढकः
अजमीढ वुञ्—आदिवृद्धि।

(5) आजक्रन्दकः
अजक्रन्द वुञ्—पूर्ववत्।

(6) दार्वकः
दार्व वुञ्।

(7) जाम्ब्वकः
जाम्ब्व वुञ्।

(8) कालञ्जरकः
कालञ्जर वुञ्।

(9) वैकुलिशकः
वैकुलिश वुञ्।

विषय०—अन्यत्र भाव के लिए 'विषय' पद का ग्रहण है। जनपद के एकशेष बहुत्व की दशा में नहीं हो। यथा—

(10) वार्त्तनः
वर्त्तन्य अण्।

अपि०—'अपि' पद का ग्रहण किसलिए किया गया है। वृद्ध संज्ञक से पूर्व सूत्र से ही सिद्ध है। तक्रकौण्डिन्यन्याय से बाधा न हो—ऐसा समुच्चित किया जाता है।

### (1554) कच्छाग्निवक्त्रगर्त्तोत्तरपदात् *126* (1350)

**देश इत्येव। उत्तरपदशब्दः प्रत्येकमभिसम्बध्यते। कच्छाद्युत्तरपदाद् देशवाचिनः प्रातिपदिकाच्च वृद्धादवृद्धाच्च वुञ् प्रत्ययो भवति शैषिकः। छाणोरपवादः। दारुकच्छकः। पैप्पलीकच्छकः। काण्डाग्नकः। वैभुजाग्नकः। ऐन्द्रवक्त्रकः। सैन्धुवक्त्रकः। बाहुगर्त्तकः। चाक्रगर्त्तकः।**

अर्थ—'देशे' का अनुवर्त्तन है। 'उत्तरपद' शब्द का प्रत्येक के साथ सम्बन्ध है। वृद्धसंज्ञक तथा अवृद्धसंज्ञक—दोनों स्थितियों में देश में वर्त्तमान तथा जिनके उत्तरपद में कच्छ, अग्नि, वक्त्र तथा गर्त्त शब्द हैं, ऐसे प्रातिपदिकों से 'वुञ्' प्रत्यय होता है, शैषिक अर्थों में। यह 'छ' और 'अण्' का अपवाद है।

उदा० (1) दारुकच्छक:
दारुकच्छे जात:—वुञ् हुआ,

(2) पैप्पलीकच्छक:
पिप्पलीकच्छ वुञ्।

(3) काण्डाग्नक:
काण्डाग्नि वुञ्।

(4) वैभुजाग्नक:
विभुजाग्नि वुञ्।

(5) ऐन्द्रवक्त्रक:
इन्द्रवक्त्र वुञ्।

(6) सैन्धुवक्त्रक:
सिन्धुवक्त्र वुञ्।

(7) बाहुगर्त्तक:
बहुगर्त वुञ्।

(8) चाक्रगर्त्तक:
चक्रगर्त्त वुञ्।

## (1555) धूमादिभ्यश्च *127* (1351)

**धूमादिभ्यो देशवाचिभ्य: प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति शैषिक:। अणादेरपवाद:। धौमक:। खाण्डक:। पाथेयशब्द: पठ्यते, तस्य योपधत्वादेव वुञि सिद्धे सामर्थ्याददेशशार्थं ग्रहणम्, तथा विदेहानर्तशब्दयोर्जनपदलक्षणे वुञि सिद्धेऽदेशार्थ: पाठ:। विदेहानां क्षत्रियाणां स्वं वैदेहकम्। आनर्त्तकम्। समुद्रशब्द: पठ्यते, तस्य नावि मनुष्ये च वुञिष्यते–सामुद्रिका नौ:, सामुद्रको मनुष्य:। अन्यत्र न भवति–सामुद्रं जलमिति। धूम। खण्ड। शशादन। आर्जुनाद। दाण्डायनस्थली। माहकस्थली। घोषस्थली। माषस्थली। राजस्थली। राजगृह। सत्रासाह। भक्षास्थली। मद्रकूल। गर्त्तकूल। आञ्जीकूल। द्व्याहाव। त्र्याहाव। संहीय। वर्वर। वर्चगर्त्त। विदेह। आनर्त्त। माठर। पाथेय। घोष। शिष्य। मित्र। बल। आराज्ञी। धार्तराज्ञी। अवयात। तीर्थ। *कूलात् सौवीरेषु* (ग०सू० 97)। *समुद्रान्नावि मनुष्ये च* (ग०सू० 98)। कुक्षि। अन्तरीप। द्वीप। अरुण। उज्जयिनी। दक्षिणापथ। साकेत।**

अर्थ—देशवाची धूमादि प्रातिपदिकों से वुञ् होता है, शैषिक अर्थों में। यह अण् आदि का अपवाद है।

उदा० (1) धौमक:
धूमे जात:—आदिवृद्धि, अक आदेश।

(2) खाण्डक:
खण्ड वुञ्—पूर्ववत्।

पाथेय शब्द का पाठ है। इसके योपध होने से वुञ् सिद्ध होने पर देश से अतिरिक्त के लिए यह विधान किया गया है।

(3) वैदेहकम्
विदेहानां क्षत्रियाणां स्वम्—वुञ् हुआ।

(4) आनर्त्तकम्
पूर्ववत् वुञ्।

समुद्र शब्द का पाठ प्राप्त होता है। नाव तथा मनुष्य अर्थ में वुञ् होता है—

(5) सामुद्रिका नौ:
समुद्र वुञ् टाप् सु।

(6) सामुद्रको मनुष्य:
समुद्र वुञ्।

अन्य अर्थों में 'वुञ्' नहीं होता है—

(7) सामुद्रं जलम्
समुद्र अण्।

शेष उदाहरण मूल में देखें।

## (1556) नगरात् कुत्सनप्रावीण्ययो: *128* (1352)

**नगरशब्दाद् वुञ् प्रत्ययो भवति शैषिक: कुत्सने प्रावीण्ये च गम्यमाने। प्रत्ययार्थविशेषणं चैतत्–कुत्सने प्रावीण्ये च जातादौ प्रत्ययार्थ इति। कुत्सनं निन्दनम्। प्रावीण्यं नैपुण्यम्।**

**केनायं मुषित: पन्था गात्रे पक्ष्यालिधूसर:।**

**इह नगरे मनुष्येण सम्भाव्यत एतन्नागरकेण। चौरा हि नागरका भवन्ति।**

**केनेदं लिखितं चित्रं मनोनेत्रविकाशि यत्॥**

**इह नगरे मनुष्येण सम्भाव्यत एतन्नागरकेण। प्रवीणा हि नागरका भवन्ति। कुत्सनप्रावीण्ययोरिति किम्? नागरा ब्राह्मणा:। कत्र्यादिषु तु संज्ञाशब्देन साहचर्यात् संज्ञानगरं पठ्यते, तस्मिन् नागरेयकमिति प्रत्युदाहार्यम्।**

**अर्थ**—निन्दा तथा निपुणता अर्थ गम्यमान हो तो 'नगर' प्रातिपदिक से 'वुञ्' प्रत्यय होता है, शैषिक अर्थों में। यह प्रत्ययार्थ का विशेषण है।

(1) नागरकः
नगरे जातः—वुञ् हुआ।
नागरकः (कुत्सितो जनः)।
नागरकः (प्रवीणो जनः)।

**कुत्सन०** अर्थात् कुत्सन व प्रवीणता अर्थों में ही 'वुञ्' होता है—

(2) नागराः (ब्राह्मणाः)
यहाँ वुञ् नहीं हुआ। कत्रि आदि में संज्ञा शब्द द्वारा साहचर्य से संज्ञानगर का पाठ है। वहाँ 'नागरेयकम्' प्रत्युदाहरण होता है।

## (1557) अरण्यान्मनुष्ये *129* (1353)

**अरण्यशब्दाद् वुञ् प्रत्ययो भवति शैषिको मनुष्येऽभिधेये। औपसंख्यानिकस्य णस्यापवादः। आरण्यको मनुष्यः। *पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम्* (म०भा०)। आरण्यकः पन्थाः। आरण्यकोऽध्यायः। आरण्यको न्यायः। आरण्यको विहारः। आरण्यको मनुष्यः। आरण्यको हस्ती। *वा गोमयेषु* (म०भा०)। आरण्यकाः, आरण्या गोमयाः। एतेष्विति किम्? आरण्याः पशवः।**

**अर्थ**—'मनुष्य' अर्थ गम्यमान रहते 'अरण्य' प्रातिपदिक से शैषिक अर्थ में वुञ् होता है। औपसंख्यानिक 'ण' का यह अपवाद है।

**उदा०** (1) आरण्यको मनुष्यः
अरण्य वुञ्, युवोरनाकौ,
आरण्यक सु—सु।

**पथ्यध्याय०**—पथिन्, अध्याय, न्याय, विहार, मनुष्य तथा हस्तिन्—इन अर्थों में भी 'वुञ्' होता है—

(2) आरण्यकोऽध्यायः
इसी प्रकार आरण्यको न्यायः, आरण्यको विहारः, आरण्यको मनुष्यः, आरण्यको हस्ती।

**वा गोमये०**—'गोविकार' अर्थ गम्यमान हो तो 'वुञ्' विकल्प से होता है—

(3) आरण्यकाः (गोमयाः)
अरण्य वुञ्।

(4) आरण्याः (गोमयाः)
पक्ष में 'ण' हुआ।

**एतेष्विति०** अर्थात् पूर्वोक्त अर्थों में ही 'वुञ्' होता है—

(5) आरण्याः पशवः
वुञ् नहीं हुआ।

## (1558) विभाषा कुरुयुगन्धराभ्याम् *130* (1354)

**कुरु, युगन्धर इत्येताभ्यां विभाषा वुञ् प्रत्ययो भवति शैषिकः। कौरवकः। कौरवः। यौगन्धरकः। यौगन्धरः (म०भा०)। जनपदशब्दावेतौ, ताभ्याम् 'अवृद्धात्' अपीति नित्ये वुञि प्राप्ते विकल्प उच्यते। कुरुशब्दः कच्छादिष्वपि पठ्यते, तत्र वचनादणपि भविष्यति। पारिशेष्याद्युगन्धरार्था विभाषा, मनुष्यतत्स्थयोः (4.2.134) तु कुरुशब्दान्नित्य एव वुञ् प्रत्ययो भवति–कौरवको मनुष्यः, कौरवकमस्य हसितमिति (म०भा०)।**

**अर्थ**—शैषिक अर्थों में देशवाची कुरु तथा युगन्धर प्रातिपदिकों से वुञ् प्रत्यय विकल्प से होता है।

**उदा०** (1) कौरवकः
कुरुषु जातः → कुरु वुञ्।
कौरवक सु—अवादेश।

(2) कौरवः
कुरु अण्—पक्ष में 'कच्छादिभ्यश्च' से 'अण्' हुआ,
कौरो अ सु—पूर्ववत्।

(3) यौगन्धरकः
युगन्धर वुञ्।

(4) यौगन्धरः
युगन्धर अण्।

**जनपद०**—ये दोनों जनपद शब्द हैं। इनसे अवृद्ध की दशा में भी नित्य 'वुञ्' प्राप्त होने पर विकल्प कहा गया है। 'कुरु' शब्द का कच्छादि गण में भी पाठ है। वहाँ वचनसामर्थ्य से 'अण्' भी होता है। पारिशेष्यात् युगन्धर के लिए विभाषा है। मनुष्य तथा तत्स्थ में तो कुरु शब्द से नित्य वुञ् प्रत्यय ही होता है।

(5) कौरवकः (मनुष्यः)
कुरु वुञ्।

उदा० (1) छैदिकः
छेदं नित्यमर्हति—ठक् हुआ।

(2) भैदिकः
भेद ठक्।

शेष उदाहरण मूल में देखें।

### (1950) शीर्षच्छेदाद्यच्च *65* (1730)

**शीर्षच्छेदशब्दाद् द्वितीयासमर्थान्नित्यमर्हतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, चकाराद्यथाविहितश्च। शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः। शैर्षच्छेदिकः। प्रत्ययसन्नियोगेन शिरसः शीर्षभावो निपात्यते।**

**अर्थ**—अर्हीय अर्थ में द्वितीयान्त समर्थ शीर्षच्छेद शब्द से नित्य 'यत्' होता है तथा यथाविहित प्रत्यय भी होता है।

उदा० (1) शीर्षच्छेद्यः
शिरश्छेदम् अर्हति—यत् हुआ,
शीर्षच्छेद य सु—शीर्ष आदेश।

(2) शैर्षच्छेदिकः
शीर्षच्छेद ठक्—पक्ष में,
शैर्षच्छेदिक सु—आदिवृद्धि।
प्रत्यय के सन्नियोग से शिरस् के स्थान पर शीर्षन् निपातन से होता है।

### (1951) दण्डादिभ्यो यः *66* (1731)

**नित्यमिति निवृत्तम्। यदित्यनुवर्त्तते। दण्डादिभ्यो द्वितीयासमर्थेभ्योऽर्हतीत्येतस्मिन्नर्थे यः प्रत्ययो भवति। ठकोऽपवादः। दण्डमर्हति दण्ड्यः। मुसल्यः। दण्ड। मुसल। मधुपर्क। कशा। अर्थ। मेधा। युग। उदक। वध। गुहा। भाग। इभ–दण्डादिः।**

**अर्थ**—'नित्यम्' पद का अनुवर्त्तन नहीं है। 'अर्हति' अर्थ में द्वितीयान्त समर्थ दण्डादि प्रातिपदिकों से 'य' होता है। यह 'ठक्' का अपवाद है।

उदा० (1) दण्ड्यः
दण्ड य सु।

शेष उदाहरण मूल में देखें।

### (1952) छन्दसि च *67* (3492)

**प्रातिपदिकमात्राच्छन्दसि विषये तदर्हतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। ठञादीनामपवादः। उदक्या वृत्तयः। यूप्यः पलाशः। गर्त्यो देशः।**

**अर्थ**—'अर्हीय' अर्थ में प्रातिपदिक मात्र से 'यत्' प्रत्यय होता है, वेद के विषय में। यह ठञ् आदि का अपवाद है।

उदा० (1) उदक्या वृत्तयः
उदक यत्—
उदक्य टाप् जस्—विभक्तिकार्य।

(2) यूप्यः पलाशः
यूप यत् सु।

(3) गर्त्यः
गर्त यत् सु।

### (1953) पात्राद् घंश्च *68* (1732)

**पात्रशब्दाद् घन् प्रत्ययो भवति चकाराद्यच्च तदर्हतीत्येतस्मिन्नर्थे। ठक्ठञोरपवादः। पात्रं परिमाणमप्यस्ति। पात्रमर्हति पात्रियः। पात्र्यः।**

**अर्थ**—'अर्हति' अर्थ में द्वितीयान्त समर्थ 'पात्र' शब्द से 'घन्' होता है तथा 'यत्' होता है। यह 'ठक्' और 'ठञ्' का अपवाद है। 'पात्र' परिमाण भी होता है।

उदा० (1) पात्रियः
पात्र घन् सु।

(2) पात्र्यः
पात्रम् अर्हति—'यत्' हुआ।

### (1954) कडङ्करदक्षिणाच्छ च *69* (1733)

**कडङ्करदक्षिणाशब्दाभ्यां छः प्रत्ययो भवति चकाराद्यच्च तदर्हतीत्येतस्मिन्नर्थे विषये। ठकोऽपवादः। कडङ्करमर्हति कडङ्करीयो गौः। कडङ्कर्यः। दक्षिणामर्हति दक्षिणीयो भिक्षुः। दक्षिण्यो ब्राह्मणः। दक्षिणाशब्दस्याल्पाच्तरस्य अपूर्वनिपातेन लक्षणव्यभिचारचिह्नेन यथासंख्याभावं सूचयति।**

**अर्थ**—'अर्हति' अर्थ में द्वितीयान्त समर्थ कडङ्कर व दक्षिणा शब्दों से 'छ' प्रत्यय होता है तथा 'यत्' होता है। यह 'ठक्' का अपवाद है।

उदा० (1) कडङ्करीयः
कडङ्करमर्हति—छ, ईय, सु।

(2) कडङ्कर्यः
कडङ्कर य सु।

(3) दक्षिणीयः
दक्षिणाम् अर्हति—छ।

(4) दक्षिण्यः
दक्षिणा य सु।

**दक्षिण०**—'कडङ्करदक्षिणा' पद में अल्पाच्तर होने से दक्षिणा शब्द का पूर्वनिपात होना था। दक्षिणा शब्द के अपूर्व निपात के द्वारा इस विधि के व्यभिचार लक्षण के द्वारा सूचित होता है कि यहाँ यथासंख्य विधि नहीं होती है।

### (1955) स्थालीबिलात् *70* (1734)

**छयतावनुवर्त्तेते। स्थालीबिलशब्दाच्छयतौ प्रत्ययौ भवतः तदर्हतीत्येतस्मिन्नर्थे। ठकोऽपवादौ। स्थालीबिलमर्हन्ति स्थालीबिलीयास्तण्डुलाः। स्थलीबिल्याः पाकयोग्या इत्यर्थः।**

**अर्थ**—छ, यत्—इनका अनुवर्त्तन नहीं है। 'तदर्हति' इस अर्थ में द्वितीयान्त समर्थ स्थालीबिल प्रातिपदिक से 'छ' और 'यत्' प्रत्यय होते हैं। ये 'ठक्' के अपवाद हैं।

**उदा०** (1) स्थलीबिलीयाः
स्थालीबिलम् अर्हन्ति—छ, ईय आदेश, जस्।

(2) स्थालीबिल्याः
स्थालीबिल य जस्—पूर्ववत्।

### (1956) यज्ञर्त्विग्भ्यां घखञौ *71* (1735)

**यज्ञशब्दादृत्विक्शब्दाच्च यथासंख्यं घखञौ प्रत्ययौ भवतः तदर्हतीत्येतस्मिन् विषये। ठकोऽपवादः। यज्ञियो ब्राह्मणः। आर्त्विजीनो ब्राह्मणः। *यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम्*। यज्ञकर्मार्हति यज्ञियो देशः। ऋत्विक्कर्मार्हति आर्त्विजीनं ब्राह्मणकुलम्। आर्हीयाणां ठगादीनां पूर्णोऽवधिः, अतः परं प्राग्वतीयष्ठञेव भवति।**

**अर्थ**—'अर्हति' अर्थ में द्वितीयान्त समर्थ यज्ञ तथा ऋत्विज् प्रातिपदिकों से यथासंख्य करके 'घ' तथा 'खञ्' होते हैं। ये 'ठक्' के अपवाद हैं।

**उदा०** (1) यज्ञियः
यज्ञ छ → यज्ञिय सु।

(2) आर्त्विजीनः
ऋत्विज् खञ्—आदिवृद्धि, ईन आदेश।

**यज्ञर्त्वि०**—यज्ञकर्म और ऋत्विज् कर्म के योग्य है—इस अर्थ में भी यज्ञ व ऋत्विज् शब्दों से पूर्वोक्त प्रत्यय होते हैं—

(3) यज्ञियो देशः
यज्ञकर्मार्हति—'घ' हुआ।

(4) आर्त्विजीनं ब्राह्मणकुलम्
ऋत्विक् कर्मार्हति—खञ्, ईन आदेश।

अर्हीय अर्थों में विहित 'ठक्' आदि की अवधि पूर्ण हो चुकी है। इससे पर 'प्राग्वतीयष्ठञ्' से 'ठञ्' ही होता है।

### (1957) पारायणतुरायणचान्द्रायणं वर्त्तयति *72* (1736)

**समर्थविभक्तिरनुवर्त्तते। अर्हतीति निवृत्तम्। पारायणादिभ्यो द्वितीयासमर्थेभ्यो वर्त्तयतीत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। पारायणं वर्त्तयत्यधीते पारायणिकश्छात्रः। तौरायणिको यजमानः। चान्द्रायणिकस्तपस्वी।**

**अर्थ**—'समर्थविभक्ति' का अनुवर्त्तन है। 'अर्हति' की निवृत्ति हो गई है। बरतता है—इस अर्थ में द्वितीयान्त समर्थ पारायण, तुरायण व चान्द्रायण प्रातिपदिकों से 'ठञ्' होता है।

**उदा०** (1) पारायणिकः
पारायणं वर्त्तयति—ठञ्, ठस्येकः।

(2) तौरायणिकः
ठञ्, आदिवृद्धि।

(3) चान्द्रायणिकः
चान्द्रायण ठञ्।

### (1958) संशयमापन्नः *73* (1737)

**संशयशब्दाद् द्वितीयासमर्थादापन्न इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। संशयमापन्नः प्राप्तः सांशयिकः स्थाणुः।**

**अर्थ**—'प्राप्त' इस अर्थ में द्वितीयान्त समर्थ 'संशय' प्रातिपदिक से 'ठञ्' होता है।

**उदा०** (1) सांशयिकः
संशयम् आपन्नः।

### (1959) योजनं गच्छति *74* (1738)

**योजनशब्दाद् द्वितीयासमर्थाद्गच्छतीत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। योजनं गच्छति यौजनिकः। *क्रोशशतयोजनशतयोरुपसंख्यानम्* (म०भा०)। क्रोशशतं गच्छति क्रौशशतिकः। यौजनशतिकः। *ततोऽभिगमनमर्हतीति च क्रोशशतयोजनशतयोरुपसंख्यानम्*। क्रोश-**

शतादभिगमनमर्हति क्रौशशतिको भिक्षुः । यौजनशतिक आचार्यः ।

अर्थ—'जाता है' इस अर्थ में द्वितीयान्त समर्थ 'योजन' प्रातिपदिक से 'ठञ्' होता है ।

उदा० (1) यौजनिकः
योजनं गच्छति—ठञ्, आदिवृद्धि ।

क्रोश—क्रोशशत व योजनशत शब्दों से 'ठञ्' होता है—

(2) क्रौशशतिकः (पूर्ववत्) ।
(3) यौजनशतिकः
योजनशत ठञ्—पूर्ववत् ।

ततोऽभि०—अभिगमन-योग्य है—इस अर्थ में क्रोशशत व योजनशत शब्दों से 'ठञ्' होता है—

(4) क्रौशशतिको भिक्षुः
क्रोशशताद् अभिगमनमर्हति—ठञ् ।

(5) यौजनशतिक आचार्यः (पूर्ववत्) ।

## (1960) पथः ष्कन् *75* (1739)

पथिन्शब्दाद् द्वितीयासमर्थाद्गच्छतीत्येतस्मिन्नर्थे ष्कन् प्रत्ययो भवति । नकारः स्वरार्थः । षकारो ङीषर्थः । पन्थानं गच्छति पथिकः । पथिकी ।

अर्थ—जाता है—इस अर्थ में द्वितीयान्त समर्थ 'पथिन्' शब्द से 'ष्कन्' होता है । 'न्' अनुबन्ध स्वर के लिए है । 'ष्' अनुबन्ध स्त्रीत्व में ङीष् के लिए है ।

उदा० (1) पथिकः
पन्थानं गच्छति → पथि ष्कन्—नकारलोप,

(2) पथिकी
पथिक ङीष् सु ।

## (1961) पन्थो ण नित्यम् *76* (1740)

नित्यग्रहणं प्रत्ययार्थविशेषणम् । पथः पन्थ इत्ययमादेशो भवति णश्च प्रत्ययो नित्यं गच्छतीत्येतस्मिन् विषये । पन्थानं नित्यं गच्छति पान्थो भिक्षां याचते । नित्यमिति किम् ? पथिकः ।

अर्थ—नित्यग्रहण प्रत्ययार्थ का विशेषण है । 'नित्य जाता है' इस अर्थ में द्वितीयान्त समर्थ 'पथिन्' प्रातिपदिक के स्थान पर 'पन्थ' आदेश होता है तथा 'ण' प्रत्यय होता है ।

उदा० (1) पान्थः
पन्थानं नित्यं गच्छति → पन्थ ण—आदिवृद्धि ।

नित्यम्० अर्थात् नित्य जाता है—इस अर्थ में 'ण' होता है—

(2) पथिकः
यहाँ 'पन्थ' आदेश व 'ण' प्रत्यय नहीं हुआ ।

## (1962) उत्तरपथेनाहृतं च *77* (1741)

निर्देशादेव समर्थविभक्तिः । उत्तरपथशब्दात्तृतीयासमर्थादाहृतमित्येतस्मिन् विषये ठञ् प्रत्ययो भवति । चकारः प्रत्ययार्थसमुच्चये, गच्छतीति च । अत्रापि तृतीयैव समर्थविभक्तिः । उत्तरपथेनाहृतमौत्तरपथिकम् । उत्तरपथेन गच्छति औत्तरपथिकः । *आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम्* (म० भा०) । वारिपथेनाहृतं वारिपथिकम् । वारिपथेन गच्छति वारिपथिकः । जङ्गलपथेनाहृतं जाङ्गलपथिकम् । जङ्गलपथेन गच्छति जाङ्गलपथिकः । स्थलपथेनाहृतं स्थालपथिकम् । स्थलपथेन गच्छति स्थालपथिकः । कान्तारपथेनाहृतं कान्तारपथिकम् । कान्तारपथेन गच्छति कान्तारपथिकः । *अजपथशङ्कुपथाभ्यां चोपसंख्यानम्* । अजपथेनाहृतं गच्छति वा आजपथिकः । शङ्कुपथेनाहृतं गच्छति वा शाङ्कुपथिकः । *मधुकमरिचयोरण् स्थलात्* । स्थलपथेनाहृतं स्थालपथं मधुकम् । स्थालपथं मरिचम् ।

अर्थ—निर्देश के द्वारा समर्थ विभक्ति है । लाया हुआ—इस अर्थ में तथा जाता है—इस अर्थ में तृतीयान्त समर्थ उत्तरपद प्रातिपदिक से 'ठञ्' होता है । चकार से 'गच्छति' का अनुकर्षण होता है ।

उदा० (1) औत्तरपथिकम्
उत्तरपथेनाहृतम् ।

(2) औत्तरपथिकः
उत्तरपथेन गच्छति ।

आहृत०—'आहृत' व 'गच्छति'—इन अर्थों में वारि, जङ्गल स्थल व कान्तारपूर्वक तृतीयान्त समर्थ शब्द से 'ठञ्' होता है—

(3) वारिपथिकम्
वारिपथेनाऽऽहृतम् ।

(4) वारिपथिकः
वारिपथेन गच्छति ।

(5) जाङ्गलपथिकम्
जङ्गलपथेनाऽऽहृतम्।

(6) जाङ्गलपथिकः
जङ्गलपथेन गच्छति।

(7) स्थालपथिकम्
स्थलपथेनाऽऽहृतम्।

(8) स्थालपथिकः
स्थलपथेन गच्छति।

(9) कान्तारपथिकम्
कान्तारपथेनाऽऽहृतम्।

(10) कान्तारपथिकः
कान्तारपथेन गच्छति।

अज०—अजपथ व शंकपथ शब्दों से 'ठञ्' होता है—

(11) आजपथिकः
अजपथ ठञ्।

(12) शाङ्कपथिकः (पूर्ववत्)।

मधुक०—मधुक व मरिच अर्थों में स्थलपूर्वक 'पथ' शब्द से 'अण्' होता है—

(13) स्थालपथं मधुकम्
स्थलपथेनाऽऽहृतम्।

(14) स्थालपथं मरिचम् (पूर्ववत्)।

## (1963) कालात् *78* (1742)

**कालादित्यधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः कालादित्येवं तद्वेदितव्यम्। वक्ष्यति–तेन निर्वृत्तम् (5.1.79)। मासेन निर्वृत्तं मासिकम्। आर्द्धमासिकम्। सांवत्सरिकम्। कालादित्यधिकारो व्युष्टादिभ्योऽण् (5.1.97) इति यावत्।**

**अर्थ**—कालात्—यह अधिकार है। यहाँ से लेकर 'व्युष्टादिभ्योऽण्' (5.1.97) तक जो-जो प्रत्यय कहे गये हैं, वे सभी कालवाची प्रातिपदिकों से होते हैं।

**उदा०** (1) मासिकम्
अगला सूत्र देखें।
(2) आर्द्धमासिकम्
(3) सांवत्सरिकम्
आगे सूत्र कहा जायेगा।

## (1964) तेन निर्वृत्तम् *79* (1743)

**तेनेति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकान्निर्वृत्तमित्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। अह्ना निर्वृत्तमाह्निकम्। आर्द्धमासिकम्। सांवत्सरिकम्।**

**अर्थ**—बनाया हुआ—इस अर्थ में तृतीयान्त समर्थ कालवाची प्रातिपदिक से 'ठञ्' होता है।

**उदा०** (1) आह्निकम्
अह्ना निर्वृत्तम्—आदिवृद्धि।
(2) आर्द्धमासिकम्
अर्द्धमास् ठञ्।

## (1965) तमधीष्टो भृतो भूतो भावी *80* (1744)

**तमिति द्वितीयासमर्थात् कालवाचिनः प्रातिपदिकादधीष्टो भृतो भूतो भावी वेत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। अधीष्टः = सत्कृत्य व्यापारितः। भृतः = वेतनेन क्रीतः। भूतः = स्वसत्तया व्याप्तकालः। भावी = तादृश एवानागतः। कालाध्वनोः (2.3.5) इति द्वितीया। मासमधीष्टो मासिकोऽध्यापकः। मासं भृतो मासिकः कर्मकरः। मासं भूतो मासिको व्याधिः। मासं भावी मासिक उत्सवः। ननु चाध्येषणं भरणं च मुहूर्त्तं क्रियते, तेन कथं मासो व्याप्यते? अध्येषणभरणे क्रियार्थे, तत्र फलभूतया क्रियया मासो व्याप्यमानस्ताभ्यामेव व्याप्त इत्युच्यते।**

**अर्थ**—सत्कारपूर्वक व्यापार, खरीदा हुआ, हो चुका तथा होने वाला—इन अर्थों में द्वितीयान्त समर्थ कालवाची प्रातिपदिकों से 'ठञ्' प्रत्यय होता है।

**उदा०** (1) मासिकः

| | |
|---|---|
| मासम् अधीष्टः | सर्वत्र 'ठञ्' हुआ। |
| मासं भृतः | |
| मासं भूतः | |
| मासं भावी | |

अध्येषण तथा भरण मुहूर्त्त भर होता है, अतः मास भर कैसे होता है? अध्येषण और भरण तो क्रिया के लिए हैं। उनमें फलभूत क्रिया द्वारा व्याप्त किया जाने वाला महीना—उन दोनों से व्याप्त मान लिया जाता है।

## (1966) मासाद्वयसि यत्खञौ *81* (1745)

**मासशब्दाद्वयस्यभिधेये यत्खञौ प्रत्ययौ भवतः। ठञोऽपवादः। अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद् भूत**

इत्येवाभिसम्बध्यते । मासं भूतो मास्यः, मासीनः । वयसीति किम् ? मासिकम् ।

अर्थ—'भूत' अर्थ में 'मास' प्रातिपदिक से 'यत्' तथा 'खञ्' होते हैं, यदि 'अवस्था' गम्यमान हो । ये 'ठञ्' के अपवाद हैं। अधीष्ट आदि चार पदों का अधिकार होने पर भी सामर्थ्यवश 'भूते' का यहाँ सम्बन्ध है ।

उदा० (1) मास्य—'यत्' हुआ ।
(2) मासीनः—'खञ्' हुआ ।

वयसि० अर्थात् अवस्था गम्यमान हो तो प्रत्यय होते हैं—

(3) मासिकम्
मास ठञ्—पूर्वोक्त प्रत्यय नहीं हुए ।

### (1967) द्विगोर्यप् *82* (1746)

मासाद्वयसीति वर्त्तते । मासान्ताद् द्विगोर्यप् प्रत्ययो भवति वयस्यभिधेये । द्वौ मासौ भूतो द्विमास्यः । त्रिमास्यः ।

अर्थ—'अवस्था' गम्यमान हो तो 'भूत' अर्थ में 'मास' शब्द है अन्त में जिसके, ऐसे द्विगुसंज्ञक प्रातिपदिक से 'यप्' होता है।

उदा० (1) द्विमास्य:
द्वौ भूतः—'यप्' हुआ ।

(2) त्रिमास्य:
पूर्ववत् 'यप्' हुआ ।

### (1968) षण्मासाण्ण्यच्च *83* (1747)

वयसीत्येव । षण्मासशब्दाद्वयस्यभिधेये ण्यत् प्रत्ययो भवति, यप् च । औत्सर्गिकष्ठञपीष्यते, स चकारेण समुच्चेतव्यः । स्वरितत्वाच्चानन्तरोऽनुवर्त्तिष्यते । तेन त्रैरूप्यं भवति–षाण्मास्यः, षण्मास्यः, षाण्मासिकः ।

अर्थ—'अवस्था' गम्यमान हो तो 'भूत' अर्थ में षण्मास प्रातिपदिक से 'ण्यत्' तथा 'यप्' प्रत्यय होते हैं। औत्सर्गिक 'ठञ्' भी होता है। स्वरित होने से आगे अनुवर्त्तन किया जायेगा। अतः तीन रूप होते हैं ।

उदा० (1) षाण्मास्य:
ण्यत्, आदिवृद्धि हुई ।

(2) षण्मास्य:
यप्, आदिवृद्धि नहीं हुई ।

(3) षाण्मासिकः
ठञ् हुआ ।

### (1969) अवयसि ठँश्च *84* (1748)

षण्मासशब्दादवयस्यभिधेये ठन् प्रत्ययो भवति । चकारेणानन्तरस्य ण्यस्य समुच्चयः क्रियते । षण्मासिको रोगः । षाण्मास्यः ।

अर्थ—'भूत' अर्थ में षण्मास प्रातिपदिक से 'ठन्' तथा 'ण्यत्' होते हैं, यदि 'अवस्था' गम्यमान न हो ।

उदा० (1) षण्मासिकः
ठन्, आदिवृद्धि नहीं हुई ।

(2) षाण्मास्य:
ण्यत् हुआ ।

### (1970) समायाः खः *85* (1749)

अधीष्टादयश्चत्वारोऽर्था अनुवर्त्तन्ते । समाशब्दाद् द्वितीयासमर्थाद् अधीष्टादिष्वर्थेषु खः प्रत्ययो भवति । ठञोऽपवादः । समामधीष्टो भृतो भूतो भावी वा समीनः । केचित्तु तेन निर्वृत्तम् (7.1.79) इति सर्वत्रानुवर्त्तयन्ति–समया निर्वृत्तः समीनः ।

अर्थ—'अधीष्ट' आदि चारो अर्थों का अनुवर्त्तन है। अधीष्ट आदि अर्थों में द्वितीयान्त समर्थ 'समा' प्रातिपदिक से 'ख' होता है। यह 'ठञ्' का अपवाद है ।

उदा० (1) समीनः
समाम् अधीष्टः
समां भृतः
समां भूतः
समां भावी
} ख हुआ ।

कुछ विद्वान् 'निर्वृत्तः' का भी अनुवर्त्तन स्वीकार करते हैं।

### (1971) द्विगोर्वा *86* (1750)

समायाः ख (5.1.85) इत्येव । समाशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु पञ्चसु वा खः प्रत्ययो भवति । पूर्वेण नित्यः प्राप्तो विकल्प्यते । प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि (7.3.17) इति प्राप्तिरस्त्येव । खेन भुक्ते पक्षे ठञपि भवति–द्विसमीनः, द्वैसमिकः; त्रिसमीनः, त्रैसमिकः ।

अर्थ—'समायाः खः' का अनुवर्त्तन है। अभीष्ट आदि अर्थों में द्वितीयान्त समर्थ समा शब्दान्त द्विगुसंज्ञक प्रातिपदिक से 'ख' विकल्प से होता है। पूर्व सूत्र के द्वारा नित्य प्राप्त होने पर विकल्प

कहा जा रहा है। 'वति' से पूर्व तक संख्यापूर्वपद शब्दों का अलुक् में तदन्तग्रहण होता है। पक्ष में 'ठञ्' भी होता है।

उदा० (1) द्विसमीनः

द्विसम ख।

(2) द्वैसमिकः

द्विसम ठञ्।

(3) त्रिसमीनः

त्रिसम ख।

(4) त्रैसमिकः

त्रिसम ठञ्।

### (1972) रात्र्यहस्संवत्सराच्च *87* (1751)

**द्विगोरित्येव। रात्रि अहः संवत्सर इत्येवमन्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति। खेन मुक्ते पक्षे ठञपि भवति। द्विरात्रीणः। द्वैरात्रिकः। त्रिरात्रिणः। त्रैरात्रिकः। द्व्यहीनः। द्वैयह्निकः। त्र्यहीणः। त्रैयह्निकः। द्विसंवत्सरीणः। द्विसांवत्सरिकः। त्रिसंवत्सरीणः। त्रिसांवत्सरिकः। संख्यायाः संवत्सरसंख्यस्य च (7.3.15) इत्युत्तरपदवृद्धिः।**

अर्थ—अधीष्ट आदि अर्थों में रात्रि, अहन् तथा संवत्सर—ये शब्द हैं अन्त में जिसके, ऐसे द्वितीयान्त समर्थ द्विगुसंज्ञक प्रातिपदिक से 'ख' प्रत्यय विकल्प से होता है। पक्ष में 'ठञ्' भी होता है।

उदा० (1) द्विरात्रीणः

द्विरात्र ख।

(2) द्वैरात्रिकः

द्विरात्र ठञ्।

(3) त्रिरात्रीणः

त्रिरात्र ख।

(4) त्रैरात्रिकः

त्रिरात्र ठञ्।

(5) द्व्यहीनः

द्व्यह ख।

(6) द्वैयह्निकः

ठञ् हुआ।

(7) त्र्यहीणः

ठञ् हुआ।

(8) त्रैयह्निकः

ठञ् हुआ।

(9) द्विसंवत्सरीणः

'ख' हुआ।

(10) द्विसांवत्सरिकः

ठञ् हुआ।

(11) त्रिसंवत्सरीणः

ख हुआ।

(11) त्रिसांवत्सरिकः

ठञ् हुआ।

संवत्सर के उत्तरपद में रहते संख्या शब्द के उत्तरपद की वृद्धि होती है।

### (1973) वर्षाल्लुक् च *88* (1753)

**द्विगोरित्येव। वर्षान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति, पक्षे ठञ्, तयोश्च वा लुग् भवति। एवं त्रीणि रूपाणि भवन्ति–द्विवर्षीणो व्याधिः, द्विवार्षिकः, द्विवर्षः। त्रिवर्षीणः, त्रिवार्षिकः, त्रिवर्षः। वर्षस्याभविष्यति (7.3.16) इत्युत्तरपदवृद्धिः। भाविनि तु–त्रैवर्षिकः।**

अर्थ—'वर्ष' शब्द है अन्त में जिसके, ऐसे द्विगुसंज्ञक द्वितीयान्त समर्थ शब्द से अधीष्ट आदि अर्थों में विकल्प से 'ख' प्रत्यय होता है तथा विकल्प से उस प्रत्यय का लुक् होता है।

उदा० (1) द्विवर्षीणः

द्विवर्ष ख सु।

पक्षे—पक्ष में ठञ् होता है। उनका लुक् होता है। इस प्रकार तीन रूप होते हैं।

(2) द्विवार्षिकः

'ठञ्' हुआ।

(3) द्विवर्षः

लुक् हुआ।

(4) त्रिवर्षीणः

'ख' हुआ।

(5) त्रिवार्षिकः

'ठञ्' हुआ।

(6) त्रिवर्षः
लुक् हुआ।
उत्तरपदवृद्धि होती है।

(7) त्रैवार्षिकः
उभयपदवृद्धि हुई।

### (1974) चित्तवति नित्यम् *89* (1755)

**चित्तवति प्रत्ययार्थेऽभिधेये वर्षशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषूत्पन्नस्य प्रत्ययस्य नित्यं लुग् भवति। पूर्वेण विकल्पे प्राप्ते वचनम्। द्विवर्षो दारकः। चित्तवतीति किम्? द्विवर्षीणो व्याधिः।**

**अर्थ**—यदि 'चेतन' प्रत्ययार्थ गम्यमान हो तो अधीष्ट आदि अर्थों में 'वर्ष' शब्द है अन्त में जिसके, ऐसे द्विगुसंज्ञक द्वितीयान्त समर्थ प्रातिपदिक से विहित का नित्य लुक् होता है। पूर्व सूत्र के द्वारा विकल्प प्राप्त होने पर यह विधान किया जा रहा है।

उदा० (1) द्विवर्षः
प्रत्यय का लुक्।

**चित्तवति०** अर्थात् चेतन प्रत्ययार्थ गम्यमान हो तो प्रत्यय का लुक् होता है—
(2) द्विवर्षीणः
लुक् नहीं हुआ।

### (1975) षष्टिकाः षष्टिरात्रेण पच्यन्ते *90* (1756)

**षष्टिकशब्दो निपात्यते। बहुवचनमतन्त्रम्। षष्टिरात्रशब्दात्तृतीयासमर्थात् कन् प्रत्ययो निपात्यते पच्यन्त इत्येतस्मिन्नर्थे रात्रिशब्दस्य च लोपः। षष्टिरात्रेण पच्यन्ते षष्टिकाः। संज्ञैषा धान्यविशेषस्य, तेन मुद्गादिष्वतिप्रसङ्गो न भवति।**

**अर्थ**—षष्टिक शब्द का निपातन किया जाता है। 'पकाया जाता है' इस अर्थ में 'षष्टिक' शब्द निपातित है। अष्टाध्यायी में बहुवचनान्त निपातन अनेकत्र प्राप्त होता है। काशिकाकार के अनुसार यह अनुचित है।

उदा० (1) षष्टिकाः
षष्टिरात्रेण पच्यन्ते—'रात्रि' शब्द का लोप,
षष्टि कन् जस्—रूप बना।

### (1976) वत्सरान्ताच्छश्छन्दसि *91* (3493)

**वत्सरान्तात्प्रातिपदिकान्निर्वृत्तादिष्वर्थेषु छन्दसि विषये छः प्रत्ययो भवति। ठञोऽपवादः। इद्वत्सरीयः। इदावत्सरीयः (काठ०सं० 13.15.71)।**

**अर्थ**—वेद के विषय में अधीष्ट आदि अर्थों में वत्सर शब्द है अन्त में जिसके, ऐसे प्रातिपदिक से 'छ' होता है। यह 'ठञ्' का अपवाद है।

उदा० (1) इद्वत्सरीयः
इद्वत्सर छ सु।

(2) इदावत्सरीयः
'छ' हुआ।

### (1977) सम्परिपूर्वात्ख च *92* (3494)

**सम्परिपूर्वाद्वत्सरान्तात् प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः प्रत्ययो भवति चकाराच्छश्च। संवत्सरीणः (तै०सं० 4.3.13.4)। परिवत्सरीणम् (ऋ० 7.10.3.8)। संवत्सरीयः। परिवत्सरीयः (का०सं० 13.15.71)।**

**अर्थ**—वेद के विषय में अधीष्ट अर्थों में सम् व परि शब्द हैं पूर्व में जिसके तथा वत्सर शब्द है अन्त में जिसके, ऐसे द्वितीयान्त समर्थ शब्द से 'ख' होता है तथा 'छ' भी होता है।

उदा० (1) संवत्सरीणः
ख, णत्व।

(2) परिवत्सरीणः
ख, णत्व।

(3) संवत्सरीयः
छ हुआ।

(4) परिवत्सरीयः
छ हुआ।

### (1978) तेन परिजय्यलभ्यकार्यसुकरम् *93* (1757)

**तेनेति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकात् परिजय्य लभ्य कार्य सुकर इत्येतेष्वर्थेषु ठञ् प्रत्ययो भवति। मासेन परिजय्यः, शक्यते जेतुं मासिको व्याधिः। सांवत्सरिकः। मासेन लभ्यो मासिकः पटः। मासेन कार्यं मासिकं चान्द्रायणम्। मासेन सुकरो मासिकः प्रासादः।**

**अर्थ**—'जीता जा सकता है' प्राप्त करने योग्य है, 'किया

जा सके तथा सुगमता से किया जा सके'—इन अर्थों में तृतीयान्त समर्थ कालवाची प्रातिपदिक से 'ठञ्' होता है।

उदा० (1) मासिकः

मासेन परिजय्यः
मासेन लभ्यः
मासेन कार्यः
मासेन सुकरः
} ठञ् हुआ।

(2) सांवत्सरिकः
'ठञ्' हुआ।

## (1979) तदस्य ब्रह्मचर्यम् *94* (1758)

तदिति द्वितीया समर्थविभक्तिः, सा चात्यन्तसंयोगे। अस्येति प्रत्ययार्थः। ब्रह्मचर्यमिति द्वाभ्यामपि सम्बध्यते–कालस्य व्यापकं प्रत्ययार्थस्य च स्वमिति। तदिति द्वितीया-समर्थात्कालवाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति ब्रह्मचर्यं चेत् गम्यते। मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी। आर्द्धमासिकः। सांवत्सरिकः। अपरा वृत्तिः– तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति यत्तदस्येति निर्दिष्टं ब्रह्मचर्यं चेत्तद्भवति। मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम्। आर्द्धमासिकम्। सांवत्सरिकम्। पूर्वत्र ब्रह्मचारी प्रत्ययार्थः, उत्तरत्र ब्रह्मचर्यमेव। उभयमपि प्रमाणमु-भयथा सूत्रप्रणयनात्। *महानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसंख्यानम्* (म०भा०)। माहानाम्निकम्। गौदानिकम्। आदित्यव्रतिकम्। *तच्चरतीति च*। महानाम्न्य ऋचः, तत्सहचरितं व्रतं तच्छब्देनोच्यते। महानाम्नीश्चरति माहा-नामिकः। आदित्यव्रतिकः। गौदानिकः। भस्याढे (6.3.35 वा०) इति पुंवद्भावेन ङीषि निवृत्ते 'नस्तद्धिते' (6.1.144) इति टिलोपः। *अवान्तरदीक्षादिभ्यो डिनि-र्वक्तव्यः*। अवान्तरदीक्षां चरति अवान्तरदीक्षी। तिलव्रती। *अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः*। अष्टाच-त्वारिंशद्वर्षाणि व्रतं चरति अष्टाचत्वारिंशकः। अष्टाच-त्वारिंशी। *चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्त-व्यः*। चातुर्मास्यानि चरति चातुर्मासकः। चातुर्मासी। *चतुर्मासाण्ण्यो यज्ञे तत्र भवे*। चतुर्षु मासेषु भवानि चातुर्मास्यानि। *संज्ञायामण्वक्तव्यः*। चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी। आषाढी। कार्तिकी। फाल्गुनी।

अर्थ—'तद्' यह द्वितीया समर्थ विभक्ति है। वह अत्यन्त संयोग में है। 'अस्य' यह प्रत्ययार्थ है। 'ब्रह्मचर्यम्' पद का दोनों के साथ सम्बन्ध है। ब्रह्मचर्य अर्थ गम्यमान हो तो षष्ठी के अर्थ में द्वितीया समर्थ कालवाची प्रातिपदिक से 'ठञ्' होता है।

उदा० (1) मासिकः
मासं ब्रह्मचारी—ठञ् हुआ।

(2) आर्द्धमासिकः
ठञ्।

(3) सांवत्सरिकः
ठञ्।

कुछ विद्वानों के अनुसार 'तद्' यह प्रथमान्त है। तब विग्रह इस प्रकार होगा—

मासोऽस्य ब्रह्मचर्यस्य—मासिकं ब्रह्मचर्यम्।
इसी प्रकार शेष उदाहरण जानने चाहिए।

प्रथम अर्थ के अनुसार प्रत्ययार्थ 'ब्रह्मचारी' है तथा द्वितीय अर्थ के अनुसार प्रत्ययार्थ 'ब्रह्मचर्यम्' है। दोनों अर्थ उचित हैं।

महानाम्न्या०—महानाम्नी आदि षष्ठी समर्थ से 'ठञ्' होता है—

(4) महानामिकः
महानाम्नीश्चरति—ठञ्।

(5) गोदानिकः
'भस्याढे' इस प्रकार पुंवद्भाव के द्वारा ङीप् के निवृत्त हो जाने पर 'नस्तद्धिते' से टि का लोप होता है।

अवान्तर०—अवान्तरदीक्षा आदि शब्दों से 'डिनि' होता है—

(6) अवान्तरदीक्षी
अवान्तरदीक्षां चरति—डिनि, टिलोप, सु।

(7) तिलव्रती (पूर्ववत्)।

अष्टा०—अष्टाचत्वारिंशत् शब्द से ड्वुन् तथा डिनि होते हैं—

(8) अष्टाचत्वारिंशकः
अष्टाचत्वारिंशत् वर्षाणि व्रतं चरति—
अष्टाचत्वारिंश् वु → अष्टाचत्वारिंशक सु—युवोरनाकौ।

(9) अष्टाचत्वारिंशी
अष्टाचत्वारिंशत् डिनि सु—टिलोप।

चातुर्मास्या०—चातुर्मास्य शब्दों का यलोप होता है तथा ड्वुन् व डिनि प्रत्यय होते हैं—

(10) चातुर्मासकः
चातुर्मास्यानि चरति—ड्वुन्, अक आदेश,
चातुर्मास् अक सु—यलोप।

(11) चातुर्मासी
डिनि हुआ।

चतुर्मासा०—यज्ञ में होने वाला—इस अर्थ में 'चतुर्मास' से 'ण्य' होता है—

(12) चातुर्मास्यानि
चतुर्षु मासेषु भवानि → चतुर् मास ण्य—आदिवृद्धि, चातुर्मास्य जस्—विभक्तिकार्य।

सञ्ज्ञाया०—संज्ञा अर्थ में 'चातुर्मास' से अण् होता है—

(13) चातुर्मासी
चतुर्षु मासेषु भवा—अण्, ङीप् हुआ।

(14) आषाढी (पूर्ववत्)।

(15) कार्त्तिकी (पूर्ववत्)।

(16) फाल्गुनी (पूर्ववत्)।

### (1980) तस्य च दक्षिणा यज्ञाख्येभ्यः *95* (1759)

तस्येति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यो दक्षिणेत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी। वाजपेयिकी। राजसूयिकी। आख्याग्रहणमकालादपि यज्ञवाचिनो यथा स्यादिति। इतरथा हि कालाधिकारादेकाहद्वादशाहप्रभृतय एव यज्ञा गृह्येरन्। प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि (7.3.17) इति कालाधिकारेऽपि द्वादशाहादिष्वस्ति प्राप्तिः।

अर्थ—षष्ठ्यन्त समर्थ यज्ञ की आख्या वाले प्रातिपदिक से 'ठञ्' होता है, 'दक्षिणा' इस अर्थ में।

उदा० (1) आग्निष्टोमिकी
अग्निष्टोमस्य दक्षिणा—ठञ्, ङीप्, सु।

(2) वाजपेयिकी
वाजपेय ठञ् ङीप्।

(3) राजसूयिकी
राजसूय—पूर्ववत्।

आख्या०—'आख्या' का ग्रहण है ताकि अकालवाची से तथा यज्ञवाची से प्रत्यय हो जाय। अन्यथा 'कालात्' इस अधिकार से एकाह, द्वादशाह प्रभृति शब्दों का ग्रहण होता है। 'वति' से पूर्व तक संख्या पूर्वपद शब्दों का अलुक् में तदन्त विधि होती है। तब 'कालात्' इस अधिकार में भी द्वादशाह आदियों में भी होता है।

### (1981) तत्र च दीयते कार्यं भववत् *96* (1760)

तत्रेति सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकाद्दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्ययो भवति। यथा–मासे भवं मासिकम्। सांवत्सरिकम्। प्रावृषेण्यम्। वासन्तिकम्। वासन्तम्। हैमनम्। हैमन्तम्। हैमन्तिकम्। शारदम्। तथा मासे दीयते कार्यं वा मासिकम्। सांवत्सरिकम्। प्रावृषि दीयते कार्यं वा प्रावृषेण्यमित्यादि। वतिः सर्वसादृश्यार्थः। योगविभागश्चात्र कर्त्तव्यः–तत्र च दीयते, यज्ञाख्येभ्य इति। अग्निष्टोमे दीयते आग्निष्टोमिकं भक्तम्। राजसूयिकम्। वाजपेयिकम्। कालाधिकारस्य पूर्णोऽवधिः, अतः परं सामान्येन प्रत्ययविधानम्।

अर्थ—दिया जाता है, करने योग्य है—इन अर्थों में सप्तम्यन्त समर्थ कालवाची प्रातिपदिक से 'भव' अर्थ के समान प्रत्यय होता है।

उदा० (1) मासिकम्
मासे दीयते, मासे कार्यम् } 'भव' के समान प्रत्यय हुआ।

(2) सांवत्सरिकम्
आदिवृद्धि।

(3) प्रावृषेण्यम्
एण्य हुआ।

(4) वासन्तिकम्
ठस्येकः।

(5) वासन्तम्
अण् हुआ।

(6) हैमन्यम्
यत् हुआ।

(7) हैमन्तिकम्
ठञ् हुआ।

(8) शारदम्
अण् हुआ।

वतिः—सर्व सादृश्य के लिए 'वति' है। इसका योगविभाग करना चाहिए। यथा—

(क) तत्र च दीयते,
(ख) यज्ञाख्येभ्यः।

(9) आग्निष्टोमिकम् (भक्तम्)
पूर्ववत्।

(10) राजसूयिकम् (पूर्ववत्)।

(11) वाजपेयिकम् (पूर्ववत्)।

'कालात्' इस अधिकार की अवधि पूर्ण हो गई है। इससे आगे सामान्य रूप से प्रत्यय का विधान किया जायेगा।

### (1982) व्युष्टादिभ्योऽण् *97* (1761)

**तत्रेति सप्तमीसमर्थेभ्यो व्युष्टादिभ्यो दीयते, कार्यम्-इत्येतयोरण् प्रत्ययो भवति। व्युष्टे दीयते कार्यं वा वैयुष्टम्। नैत्यम्। *अण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम्* (म०भा०)। आग्निपदम्। पैलुमूलम्। किं वक्तव्यम्? न वक्तव्यम्, अत्रैव ते पठितव्याः। व्युष्ट। नित्य। निष्क्रमण। प्रवेशन। तीर्थ। सम्भ्रम। आस्तरण। संग्राम। सङ्घात। अग्निपद। पीलूमुल। प्रवास। उपसंक्रमण-व्युष्टादिः।**

**अर्थ**—दिया जाता है, करने योग्य है—इन अर्थों में सप्तम्यन्त समर्थ व्युष्टादि प्रातिपदिकों से 'अण्' होता है।

**उदा०** (1) वैयुष्टम्
व्युष्टे दीयते (कार्यं वा)—अण्, ऐच् आगम, सु।

(2) नैत्यम्
नित्य अण् सु।

**अण्प्रक०**—अग्नि पद आदि से 'अण्' होता है—

(3) आग्निपदः
अग्निपद अण् सु।

शेष उदाहरण मूल में देखें।

### (1983) तेन यथाकथाचहस्ताभ्यां णयतौ *98* (1762)

**दीयते कार्यमिति वर्त्तते। तेनेति तृतीयासमर्थाभ्यां यथाकथाचहस्तशब्दाभ्यां यथासंख्यं णयतौ प्रत्ययौ भवतः। दीयते कार्यमित्येतयोरर्थयोः प्रत्येकमभिसम्बन्धः, यथासंख्यं नेष्यते। यथाकथाचशब्दोऽव्ययसमुदायोऽनादरे वर्त्तते। तृतीयाऽर्थमात्रं चाऽत्र सम्भवति, न तु तृतीया समर्थविभक्तिः। यथाकथाच दीयते कार्यं वा याथाकथाचम्। हस्तेन दीयते कार्यं वा हस्त्यम्।**

**अर्थ**—दिया जाता है, करने योग्य है—इस अर्थ में तृतीयान्त समर्थ यथाकथाच और हस्त प्रातिपदिकों से यथासंख्य करके 'ण' तथा 'यत्' होते हैं। 'दीयते' तथा 'कार्यम्' इन दोनों का प्रत्येक के साथ सम्बन्ध है। यहाँ यथासंख्य नियम लागू नहीं होता। यथाकथाच शब्द अनादर में वर्त्तमान है। तृतीया अर्थ मात्र यहाँ सम्भव होता है; 'तृतीया समर्थ विभक्ति' ऐसा नहीं।

**उदा०** (1) याथाकथाचम्
यथाकथाच दीयते (कार्यं वा)—'ण' हुआ।

(2) हस्त्यम्
हस्ते दीयते (कार्यं वा)—'यत्' हुआ।

### (1984) सम्पादिनि *99* (1763)

**तेनेत्येव। तृतीयासमर्थात्सम्पादिन्यभिधेये ठञ् प्रत्ययो भवति। गुणोत्कर्षः सम्पत्तिः। आवश्यके णिनिः (3.3.170)। कर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टिकं मुखम्। वास्त्रयुगिकं शरीरम्। वस्त्रयुगेण विशेषतः शोभत इत्यर्थः।**

**अर्थ**—शोभित किया—इस अर्थ में तृतीयान्त समर्थ प्रातिपदिक से 'ठञ्' होता है।

**उदा०** (1) कार्णवेष्टकिकं शरीरम्
कर्णवेष्टकाभ्यां सम्पादि—ठञ् हुआ।

(2) वास्त्रयुगिकम्
वस्त्रयुग ठञ्।

### (1985) कर्मवेषाद्यत् *100* (1764)

**कर्मन्-वेषशब्दाभ्यां तृतीयासमर्थाभ्यां यत्प्रत्ययो भवति सम्पादिनीत्येतस्मिन् विषये। ठञोऽपवादः। कर्मणा सम्पद्यते कर्मण्यं शरीरम्। वेषेण सम्पद्यते वेष्यो नटः।**

**अर्थ**—शोभित किया—इस अर्थ में तृतीयान्त समर्थ कर्मन् व वेष प्रातिपदिकों से 'यत्' होता है। यह 'ठञ्' का अपवाद है।

**उदा०** (1) कर्मण्यम्
कर्मन् यत् सु।

(2) वेष्यः
वेषेण सम्पद्यते—
पूर्ववत् यत्, विभक्तिकार्य।

### (1986) तस्मै प्रभवति सन्तापादिभ्यः *101* (1765)

**तस्मा इति चतुर्थीसमर्थेभ्यः सन्तापादिभ्यः प्रभवतीत्यस्मिन् विषये ठञ् प्रत्ययो भवति। समर्थः शक्तः प्रभवतीत्युच्यते।**

अलमर्थे चतुर्थी । सन्तापाय प्रभवति सान्तापिकः । सान्नाहिकः । सन्ताप । संनाह । संग्राम । संयोग । संपराय । संपेष । निष्पेष । निसर्ग । असर्ग । विसर्ग । उपसर्ग । उपवास । प्रवास । संघात । संमोदन । सक्तु । मांसौदनाद्विगृहीतादपि-सन्तापादिः ।

अर्थ—समर्थ होता है—इस अर्थ में चतुर्थ्यन्त समर्थ सन्तापादि शब्दों से 'ठञ्' होता है। यह 'अलम्' अर्थ में चतुर्थी है।

उदा० (1) सान्तापिकः
सन्तापाय प्रभवति—'ठञ्' हुआ।

(2) सान्नाहिकः (पूर्ववत्)।
शेष उदाहरण मूल में देखें।

### (1987) योगाद्यच्च *102* (1766)

योगशब्दाद्यत्प्रत्ययो भवति चकाराट्ठञ् तस्मै प्रभवतीत्येतस्मिन् विषये । योगाय प्रभवति योग्यः । यौगिकः ।

अर्थ—समर्थ है—इस अर्थ में चतुर्थ्यन्त समर्थ 'योग' प्रातिपदिक से 'यत्' तथा 'ठञ्' प्रत्यय होते हैं।

उदा० (1) योग्यः
योगाय प्रभवति—'यत्' हुआ।

(2) यौगिकः
योग ठञ्।

### (1988) कर्मण उकञ् *103* (1767)

कर्मन् शब्दादुकञ् प्रत्ययो भवति तस्मै प्रभवतीत्येतस्मिन्नर्थे । ठञोऽपवादः । कर्मणे प्रभवति कार्मुकं धनुः ।

अर्थ—समर्थ है—इस अर्थ में चतुर्थ्यन्त समर्थ 'कर्मन्' प्रातिपदिक से 'उकञ्' प्रत्यय होता है। यह 'ठञ्' का अपवाद है।

उदा० (1) कार्मुकम्
कर्मणे प्रभवति → कर्मन् उकञ्—आदिवृद्धि, नलोप,
कार्मुक सु—विभक्तिकार्य।

### (1989) समयस्तदस्य प्राप्तम् *104* (1768)

समयशब्दात् तदिति प्रथमासमर्थात् अस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति यत्तत्प्रथमासमर्थं प्राप्तं चेत्तद्भवति । समयः प्राप्तोऽस्य सामयिकं कार्यम् । उपनतकालमित्यर्थः । समर्थविभक्तिनिर्देश उत्तरार्थः ।

अर्थ—यदि प्रथमा समर्थ 'समय' प्रातिपदिक 'प्राप्त' समानाधिकरण वाला हो तो उस प्रातिपदिक से षष्ठी के अर्थ में 'ठञ्' होता है।

उदा० (1) सामयिकम्
समयः प्राप्तोऽस्य → समय ठञ्।

समर्थ विभक्ति का निर्देश उत्तरशास्त्र के लिए है।

### (1990) ऋतोरण् *105* (1769)

तदस्य प्राप्तमित्यनुवर्त्तते । ऋतुशब्दात्तदिति प्रथमासमर्थात् अस्येति षष्ठ्यर्थेऽण् प्रत्ययो भवति तदस्य प्राप्तमित्येतस्मिन् विषये । ऋतुः प्राप्तोऽस्य आर्त्तवं पुष्पम् । *तदस्य प्रकरणे उपवस्त्रादिभ्य उपसंख्यानम्* । उपवस्ता प्राप्तोऽस्य औपवस्त्रम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् ।

अर्थ—यदि 'ऋतु' शब्द 'प्राप्त' समानाधिकरण वाला हो तो षष्ठी के अर्थ में प्रथमा समर्थ 'ऋतु' शब्द से 'अण्' होता है।

उदा० (1) आर्तवम् (पुष्पम्)
ऋतुः प्राप्तोऽस्य → ऋतु अण्—
आर्तो अ सु—गुण, आदिवृद्धि।

तदस्य—उपवस्त्र आदि शब्दों से 'अण्' होता है—

(2) औपवस्त्रम्
उपवस्त्र अण् सु।

(3) प्राशित्रम्
प्राशितृ अण् सु।

### (1991) छन्दसि घस् *106* (3495)

ऋतुशब्दाच्छन्दसि विषये घस् प्रत्ययो भवति तदस्य प्राप्तमित्येतस्मिन् विषये । अणोऽपवादः । अ॒यं ते॒ योनि॑र्ऋ॒त्वियः॑ (ऋ० 3.29.10) ।

अर्थ—वेद के विषय में 'त.दस्य प्राप्तम्' इस अर्थ में 'ऋतु' शब्द से 'घस्' होता है। यह 'अण्' का अपवाद है।

उदा० (1) ऋत्वियः (ऋ०3.29.10.)
ऋतु घस्—गुण ईयादेश, सु।

### (1992) कालाद्यत् *107* (1770)

कालशब्दाद्यत्प्रत्ययो भवति तदस्य प्राप्तमित्येतस्मिन् विषये । कालः प्राप्तोऽस्य काल्यस्तापः । काल्यं शीतम् ।

अर्थ—'तदस्य प्राप्तम्' इस अर्थ में काल प्रातिपदिक से 'यत्' होता है।

उदा० (1) काल्यः
कालः प्राप्तोऽस्य—काल यत् सु।

## (1993) प्रकृष्टे ठञ् *108* (1771)

कालादिति वर्त्तते, तदस्येति च। प्राप्तमिति निवृत्तम्। प्रकर्षेण कालो विशेष्यते। प्रकर्षे वर्तमानात्कालात् प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति। प्रकृष्टो दीर्घः कालोऽस्य कालिकमृणम्। कालिकं वैरम्। ठञ्ग्रहणं विस्पष्टार्थम्।

अर्थ—'कालात्' का अधिकार है। 'प्राप्तम्' की निवृत्ति हो चुकी है। प्रकर्ष अर्थ में वर्त्तमान 'काल' शब्द जो प्रथमा समर्थ, उसे षष्ठी के अर्थ में 'ठञ्' होता है।

उदा० (1) कालिकम्
प्रकृष्टो दीर्घः कालोऽस्य—'ठञ्' हुआ।
'ठञ्' का ग्रहण स्पष्टता के लिए है।

## (1994) प्रयोजनम् *109* (1772)

तदस्येत्येव। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति यत्तत्प्रथमासमर्थं प्रयोजनं चेत्तद्भवति। इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम्। गाङ्गामहिकम्।

अर्थ—प्रयोजन समानाधिकरण वाले प्रथमा समर्थ प्रातिपदिक से षष्ठी के अर्थ में 'ठञ्' होता है।

उदा० (1) ऐन्द्रमहिकम्
इन्द्रमहः प्रयोजनमस्य—'ठञ्' हुआ,
ऐन्द्रमह इक सु—आदिवृद्धि।
(2) गाङ्गामहिकम् (पूर्ववत्)।

## (1995) विशाखाषाढादण्मन्थदण्डयोः *110* (1773)

विशाखाषाढाशब्दाभ्यामण् प्रत्ययो भवति तदस्य प्रयोजनमित्येतस्मिन् विषये यथासंख्यं मन्थदण्डयोरभिधेययोः। विशाखा प्रयोजनमस्य वैशाखो मन्थः। आषाढो दण्डः। *चूडादिभ्य उपसंख्यानम्*। चूडा प्रयोजनमस्य चौडम्। श्रद्धा प्रयोजनमस्य श्राद्धम्।

अर्थ—'तदस्य प्रयोजनम्' इस अर्थ में प्रथमासमर्थ विशाखा तथा आषाढ शब्दों से यथासंख्य करके 'मन्थ' तथा 'दण्ड' वाच्य हो तो 'अण्' होता है।

उदा० (1) वैशाखो मन्थः
विशाखा प्रयोजनमस्य—अण् हुआ।
(2) आषाढो दण्डः
चूडादि०—चूडा आदि शब्दों से 'अण्' होता है—
(3) चौडम्
चूडा अण् सु।
(4) श्राद्धम्—पूर्ववत्।

## (1996) अनुप्रवचनादिभ्यश्छः *111* (1774)

अनुप्रवचनादिभ्यः प्रातिपदिकेभ्यश्छः प्रत्ययो भवति तदस्य प्रयोजनमित्येतस्मिन् विषये। ठञोऽपवादः। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम्। उत्थापनीयम्। *विशिपूरिपतिरुहि प्रकृतेरनात्सपूर्वपदादुपसंख्यानम्* (म०भा०)। गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम्। प्रपापूरणीयम्। अश्वप्रपतनीयम्। प्रासादारोहणीयम्। *स्वर्गादिभ्यो यद्वक्तव्यः*। स्वर्गः प्रयोजनस्य स्वर्ग्यम्। यशस्यम्। आयुष्यम्। काम्यम्। धन्यम्। *पुण्याहवाचनादिभ्यो लुग्वक्तव्यः*। पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम्। स्वस्तिवाचनम्। शान्तिवाचनम्। अनुप्रवचन। उत्थापन। प्रवेशन। अनुप्रवेशन। उपस्थापन। संवेशन। अनुवेशन। अनुवचन। अनुवादन। अनुवासन। आरम्भण। आरोहण। प्ररोहण। अन्वारोहण-अनुप्रवचनादिः।

अर्थ—'तदस्य प्रयोजनम्' इस अर्थ में प्रथमा समर्थ अनुप्रवचन आदि प्रातिपदिकों से षष्ठी के अर्थ में 'छ' होता है। यह 'ठञ्' का अपवाद है।

उदा० (1) अनुप्रवचनीयम्
अनुप्रवचनमस्य प्रयोजनम्—छ, ईय, सु।
(2) उत्थापनीयम् (पूर्ववत्)।

विशि०—विशि, पूरि, पति और रुहि—ये धातुएँ हैं प्रकृति जिसकी, ऐसा जो 'यु', उससे पूर्व में स्थित शब्द से 'छ' होता है—

(3) गृहप्रवेशनीयम्
ग्रहप्रवेशनं प्रयोजनमस्य—छ, पूर्ववत्।
(4) प्रपापूरणीयम्
प्रपापूरणमस्य प्रयोजनम्—पूर्ववत्।

(5) अश्वप्रपतनीयम् (पूर्ववत्)।
(6) प्रासादारोहणीयम् (पूर्ववत्)।

स्वर्गादि—स्वर्ग आदि शब्दों से 'यत्' होता है—

(7) स्वर्ग्यम्
स्वर्गः प्रयोजनमस्य—'यत्' हुआ।

(8) यशस्यम् (पूर्ववत्)।
(9) आयुष्यम् (पूर्ववत्)।
(10) काम्यम् (पूर्ववत्)।

पुण्याह०—पुण्याहवाचन् आदि शब्दों से प्रत्यय का लुक् होता है—

(11) पुण्याहवाचनम्
पुण्याहवाचनमस्य प्रयोजनम्—प्रत्यय का लुक् हुआ।

(12) स्वस्तिवाचनम् (पूर्ववत्)।
(13) शान्तिवाचनम् (पूर्ववत्)।

शेष उदाहरण मूल में देखें।

## (1997) समापनात् सपूर्वपदात् *112* (1775)

**समापनशब्दात्सपूर्वपदाद्विद्यमानपूर्वपदाच्छः प्रत्ययो भवति तदस्य प्रयोजनमित्येतस्मिन् विषये। ठञोऽपवादः। छन्दस्समापनं प्रयोजनमस्य छन्दःसमापनीयम्। व्याकरणसमापनीयम्। पदग्रहणं बहुच्पूर्वनिरासार्थम्।**

अर्थ—जिसका पूर्वपद विद्यमान है, ऐसे समापन प्रातिपदिक से 'छ' होता है, 'तदस्य प्रयोजनम्' विषय में।

उदा० (1) छन्दःसमापनीयम्
छन्दस्समापनं प्रयोजनमस्य—'छ' हुआ।

'बहु है पूर्व में जिसके' इसके निरास के लिए 'पद' शब्द का प्रयोग है।

## (1998) ऐकागारिकट् चौरे *113* (1776)

**ऐकागारिकट् इति निपात्यते चौरेऽभिधेये। एकागारं प्रयोजनमस्य ऐकागारिकः चौरः। ऐकागारिकी। किमर्थमिदं निपात्यते, यावता प्रयोजनमित्येव सिद्धष्ठञ्? चौरे नियमार्थं वचनम्, इह मा भूत्–एकागारं प्रयोजनमस्य भिक्षोरिति। टकारः कार्यावधारणार्थः–ङीबेव भवति, न ञित्स्वर इति। अपरे पुनरिकट् प्रत्ययं वृद्धिं च निपातयन्ति।**

अर्थ—'तदस्य प्रयोजनम्' इस अर्थ में 'ऐकागारिकट्' शब्द निपातनसिद्ध है, 'चौर' अभिधेय हो तो।

उदा० (1) ऐकागारिकः
एकागारं प्रयोजनमस्य—निपातन से 'इकट्' हुआ।

(2) ऐकागारिकी
ङीप् हुआ।

इसका निपातन किसलिए किया गया है? 'प्रयोजनम्' इससे ही प्रत्यय सिद्ध था। 'चौरे' इस अर्थ में नियम के लिए यह विधान किया गया है। यहाँ न हो। यथा—

एकागारं प्रयोजनमस्य भिक्षोः।

टकार कार्य के अवधारण के लिए है। स्त्रीत्व में ङीप् ही होता है; ञित् स्वर नहीं होता। कुछ विद्वान् यहाँ 'इकट्' प्रत्यय की कल्पना करते हैं।

## (1999) आकालिकडाद्यन्तवचने *114* (1777)

**आकालिकट् इति निपात्यते आद्यन्तवचने। समानकालशब्दस्याकालशब्द आदेशः, आद्यन्तयोश्चैतद्विशेषणम्, इकट् प्रत्ययश्च निपात्यते। समानकालावाद्यन्तावस्य आकालिकः स्तनयित्नुः। आकालिकी विद्युत्, जन्मना तुल्यकालविनाशा, उत्पन्नानन्तरं विनाशिनीत्यर्थः। *आकालाट् ठँश्च* (म० भा०)। चात् ठञ् च। आकालिका विद्युत्। ठञः पूर्णोऽवधिः।**

अर्थ—'तदस्य प्रयोजनम्' विषय में आद्यन्त विशेषण हो तो आकालिकट् शब्द निपातित है। समानकाल शब्द को 'आकाल' आदेश होता है। निपातन से 'इकट्' प्रत्यय होता है।

उदा० (1) आकालिकः
आकाल इकट्।

(2) आकालिकी
ङीप् हुआ।

आकालाद्०—आकाल शब्द से 'ठन्' होता है तथा 'ठञ्' भी होता है—

(3) आकालिका
ठन् हुआ, ङीप् नहीं हुआ, टाप् हुआ।
यहाँ 'ठञ्' की अवधि पूर्ण हो गई है।

दोनों प्रत्ययों में शब्द के स्वरूप में कोई अन्तर नहीं पड़ता; केवल स्त्रीप्रत्यय में भेद है। ठञ् प्रत्ययान्त से ङीप् (आकालिकी) होता है तथा ठन् प्रत्ययान्त से टाप् (आकालिका) होता है।

वार्त्तिककार ने प्रकृत सूत्र में गौरव माना है। वे इसके स्थान पर 'आकालाट् ठंश्च' ऐसा वार्त्तिक का पाठ करते हैं—

वार्त्तिककारो मन्यते।.... । आकालाट् ठंश्चेति सूत्रं कर्त्तव्यम्।[1]

## (2000) तेन तुल्यं क्रिया चेद्वतिः *115* (1778)

**तेनेति तृतीयासमर्थात्तुल्यमित्यर्थे वतिः प्रत्ययो भवति यत्तुल्यं क्रिया चेत्सा भवति। ब्राह्मणेन तुल्यं वर्त्तते ब्राह्मणवत्। राजवत्। क्रियाग्रहणं किम्? गुणद्रव्यतुल्ये मा भूत्–पुत्रेण तुल्यः स्थूलः, पुत्रेण तुल्यः पिङ्गलः, पुत्रेण तुल्यो गोमान्।**

**अर्थ**—तुल्य अर्थ में तृतीयान्त समर्थ प्रातिपदिक से 'वति' होता है; परन्तु जो तुल्य हो, वह क्रिया ही हो।

**उदा०** (1) ब्राह्मणवत्
ब्राह्मणेन तुल्यं वर्त्तते—'वति' हुआ।

(2) राजवत्
राजन् वति—पूर्ववत्।

**क्रियाग्रहण०**—क्रिया का ग्रहण किया गया है, ताकि द्रव्य व गुण की तुल्यता होने पर प्रत्यय न हो। पुत्रेण सह—स्थूलः। पुत्रेण तुल्यः—पिङ्गलः। पुत्रेण तुल्यो गोमान्।

## (2001) तत्र तस्येव *116* (1779)

**तत्रेति सप्तमीसमर्थात्तस्येति षष्ठीसमर्थाच्च इवार्थे वतिः प्रत्ययो भवति। मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। पाटलिपुत्रवत् साकेते परिखा। षष्ठीसमर्थात्–देवदत्तस्येव देवदत्तवद् यज्ञदत्तस्य गावः। यज्ञदत्तस्येव देवदत्तस्य दन्ताः यज्ञदत्तवत्।**

**अर्थ**—'इव' के अर्थ में सप्तम्यन्त तथा षष्ठ्यन्त प्रातिपदिक से 'वति' होता है।

**उदा०** (1) मथुरावत्
मथुरायामिव
(2) पाटलिपुत्रवत् (पूर्ववत्)।
(3) देवदत्तवत्
देवदत्तस्येव—प्रत्यय हुआ।
(4) यज्ञदत्तवत् (पूर्ववत्)।

देवस्येव—देववत्—यहाँ षष्ठ्यन्त से सदृश अर्थ में वति हुआ है। 'देववद् कृष्णस्य गावः' यहाँ भी द्रव्य की तुल्यता है। इसका 'देव की तरह' ऐसा अर्थ करना अशुद्ध है। अपितु देव (की गायों) के समान कृष्ण की गायें—ऐसा अर्थ होता है। कारण कि यहाँ देव तथा कृष्ण का सादृश्य नहीं बताया जा रहा है।

'इव' शब्द का प्रयोग होने पर उपमान व उपमेय में एक समान विभक्तियाँ होती हैं—

राम इव देवो गच्छति।
गाम् इव सूकरं मन्यते स्थितप्रज्ञः।
भीमेन इव देवेन गदायुद्धं कृतम्।
अद्यत्वे जनाः शत्रवे इव भ्रात्रे द्रुह्यन्ति।
आकाशाद् इव प्रासादात् पतति।
देवस्य इव कृष्णस्य गावः।
मथुरायाम् इव स्रुघ्ने प्राकारः। कक्षे इव—कक्षवत्।

## (2002) तदर्हम् *117* (1780)

**तदिति द्वितीयासमर्थादर्हमित्येतस्मिन्नर्थे वतिः प्रत्ययो भवति। राजानमर्हति राजवत्पालनम्। ब्राह्मणवत्। ऋषिवत्। क्षत्रियवत्।**

**अर्थ**—अर्हण क्रिया के वाच्य रहते द्वितीया समर्थ प्रातिपदिक से 'वति' प्रत्यय होता है।

**उदा०** (1) राजवत्
राजानम् अर्हति।

(2) ब्राह्मणवत्
ब्राह्मण वति।

(3) ऋषिवत् (पूर्ववत्)।
(4) क्षत्रियवत् (पूर्ववत्)।

## (2003) उपसर्गाच्छन्दसि धात्वर्थे *118* (3496)

**उपसर्गात्साधने धात्वर्थे वर्त्तमानात्स्वार्थे वतिः प्रत्ययो भवति छन्दसि विषये। यदुद्वतो निवतो यासि वप्सद् (ऋ० 10.142.4) उद्गतानि निगतानि च (म० भा०)।**

**अर्थ**—वेद के विषय में धात्वर्थ में विद्यमान उपसर्ग से 'वति' होता है, स्वार्थ में।

**उदा०** (1) उद्वतः (ऋ०10.142.4)
उद् वति।

(2) निवतः (ऋ०10.142.4)
पूर्ववत्।

1. पदम० 5.1.114

## (2004) तस्य भावस्त्वतलौ *119* (1781)

**तस्येति षष्ठीसमर्थाद् भाव इत्येतस्मिन्नर्थे त्वतलौ प्रत्ययौ भवतः। भवतोऽस्मादभिधानप्रत्ययाविति भावः। शब्दस्य प्रवृत्तिनिमित्तं भावशब्देनोच्यते। अश्वस्य भावः अश्वत्वम्। अश्वता। गोत्वम्। गोता।**

**अर्थ**—षष्ठ्यन्त समर्थ प्रातिपदिक से 'त्व' और 'तल्' होते हैं, भाव अर्थ में। तल् को लित् स्वरार्थ किया गया है। तलन्त शब्द स्त्रीलिङ्ग होता है। द्र०—तलन्तः (लिङ्गा० 17)। त्व प्रत्ययान्त शब्द नपुंसकलिङ्ग में होते हैं। द्र०—त्वष्यञौ तद्धितौ (लिङ्गा० 120)। प्रकृतिजन्यबोधे प्रकारो भावः—प्रकृतिजनित ज्ञान में विशेषणतया जिसका आभास होता है, वह 'भाव' कहलाता है। यथा—

1. 'गो' प्रकृति है। इस शब्द के श्रवण होने पर गोत्व युक्त व्यक्ति का ज्ञान होता है। यह भाव हुआ।

2. जातिशब्द में जाति को भाव कहते हैं।

3. कृदन्त, तद्धितान्त व समास में जो सम्बन्ध होता है, उसे 'भाव' कहते हैं। यथा—'हारकत्वम्'—यहाँ हरणक्रिया के साथ कर्तृत्व सम्बन्ध ही भाव है।

'वासुदेवत्वम्'—यहाँ वासुदेव के साथ पुत्रत्व सम्बन्ध ही भाव है।

'दशरथपुत्रत्वम्'—यहाँ 'दशरथ' के साथ पुत्र का जन्य-जनक सम्बन्ध ही भाव है।

4. 'कृष्ण' आदि के गुणवाचक होने पर तद्गत जाति को भाव कहते हैं।

'कृष्ण' आदि के गुणवाचक होने पर उनका गुण ही भाव कहलाता है।

उदा० (1) अश्वत्वम्
अश्वस्य भावः—त्व, सु।

(2) अश्वता
अश्व तल् टाप् सु।

(3) गोत्वम्
गो त्व।

(4) गोता
गो तल् टाप् सु।

## (2005) आ च त्वात् *120* (1782)

**ब्रह्मणस्त्वः (5.1.136) इति वक्ष्यति। आ एतस्मात्त्वसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामस्तत्र त्वतलौ प्रत्ययाधिकृतौ वेदितव्यौ। वक्ष्यति–पृथ्वादिभ्य इमनिज्वा (5.1.122) इति। प्रथिमा। पार्थवम्। पृथुत्वम्। पृथुता। म्रदिमा। मार्दवम्। मृदुत्वम्। मृदुता। अपवादैः सह समादेशार्थं वचनम्, कर्मणि च विधानार्थम्–गुणवचनब्राह्मणादिभ्यः कर्मणि च (5.1.124) इति। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रियाः भावः स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पुंसो भावः पुंस्त्वम्। पुंस्ता। पौंस्नम्।**

**अर्थ**—आगे 'ब्रह्मणस्त्वः' (5.1.136) सूत्र का पाठ किया जायेगा। यहाँ से लेकर 'ब्रह्मणस्त्वः' पर्यन्त 'त्व' तथा 'तल्' होते हैं।

भाव यह है कि मध्य में जो इमनिच् आदि अपवादरूप प्रत्यय कहे गये हैं, उनके साथ त्व तथा तल् का भी समावेश होता है। इस प्रकार अपवादसूत्रों के द्वारा त्व तथा तल् का बाध नहीं हो सकेगा।

सूत्रस्थ 'च' पद का प्रयोजन यह है कि नञ् व स्नञ् प्रत्ययों के साथ भी उक्त (त्व तथा तल्) प्रत्यय हो जाते हैं। 'च' का प्रयोग समुच्चयग्रहण के लिए है। 'त्वात्' पद के द्वारा 'ब्रह्मणस्त्वः' सूत्र का निर्देश है।

उदा०—यहाँ प्रदर्शित उदाहरणों की सिद्धि आगे तत् तत् सूत्रों पर देखी जा सकती है।

## (2006) न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः *121* (1783)

**इत उत्तरे ये भावप्रत्ययास्ते नञ्पूर्वात्तत्पुरुषान्न भवन्ति चतुरादीन् वर्जयित्वा। वक्ष्यति–पत्यन्तपुरोहितादिभ्यो यक् (5.1.128) इति। अपतित्वम्। अपतिता। अपटुत्वम्। अपटुता। अरमणीयत्वम्। अरमणीयता। नञ्पूर्वादिति किम्? बार्हस्पत्यम्, प्राजापत्यम्। तत्पुरुषादिति किम्? नास्य पटवः सन्तीत्यपटुः, तस्य भाव आपटवम्, आलघवम्। अचतुरादिभ्य इति किम्? आचतुर्यम्, आसङ्गत्यम्, आलवण्यम्, आवट्यम्, आयुध्यम्, आकत्यम्, आरस्यम्, आलस्यम्।**

**अर्थ**—यहाँ से आगे कहे गए प्रत्यय चतुर, मंगल, लवण, बुध, कत, रस तथा लस प्रातिपदिकों को छोड़कर नञ्पूर्वक तत्पुरुषसंज्ञक शब्द से नहीं होते हैं, भाव अर्थ में।

यह अधिकारसूत्र है। सूत्र की शर्तों के अनुसार—

(क) नञ् पूर्व वाले तत्पुरुष से आगे कहे जाने वाले भाव प्रत्यय नहीं होते।

(ख) सूत्रोक्त चतुर आदि शब्द यदि नञ्पूर्व तत्पुरुष में होंगे तो आगे कहे जाने वाले भाव प्रत्यय हो जाते हैं।

'पत्यन्तपुरोहितादिभ्यो यक्' (5.1.127) के द्वारा पत्यन्त व पुरोहित आदि प्रातिपदिकों से यक् होता है। प्रकृत सूत्र के अधिकार से उक्त यक् प्रत्यय नञ् तत्पुरुष से नहीं होगा। यथा—

अपतित्वम्, अपतिता—यहाँ त्व तथा तल् हुआ है।

1. 'नञ्पूर्वात्' अर्थात् नञ् पूर्व शब्द से आगे कहे गए भावप्रत्यय नहीं होंगे—प्रजापतेर्भावः—प्राजापत्यम् (नञ् पूर्व न होने से त्यक् हो गया। इसका निषेध नहीं हुआ।)

2. 'तत्पुरुषात्' अर्थात् तत्पुरुषसंज्ञक प्रातिपदिक से आगे कहे गये भाव प्रत्यय नहीं होंगे—

न अस्य पटवः सन्ति—अपटुः। तस्य भावः—आपटवम्; यहाँ नञ् पूर्व है, परन्तु बहुव्रीहि है। अतः प्रकृत सूत्र के द्वारा निषेध नहीं हुआ। अण् हुआ।

3. 'अचतुरादिभ्यः' का अर्थ यह है कि चतुर आदि शब्द हों तो पूर्वोक्त निषेध नहीं होता अर्थात् आगे जो-जो प्रत्यय कहे जायेंगे, वे होंगे ही—

अचतुर ष्यञ्—आचतुर्यम्—यहाँ ष्यञ् हुआ। इसका निषेध नहीं हुआ।

**उदा०** (1) अपतितत्वम्
अपतितस्य भावः—त्व।

(2) अपतिता
तल्, टाप्, सु।

(3) अपटुत्वम्
अपटु त्व सु।

(4) अपटुता
तल्, टाप्।

(5) अरमणीयत्वम् (पूर्ववत्)।

(6) अरमणीयता
तल्, टाप्।

**नञ् पूर्वात्०** अर्थात् **नञ् पूर्वक** तत्पुरुष से ही होता है—

(7) बार्हस्पत्यम्
बृहस्पति ष्यञ्—त्व, तल् नहीं हुए।

(8) प्राजापत्यम्
पूर्ववत् ष्यञ्।

**तत्पुरुषात्** अर्थात् नञ्पूर्वक **तत्पुरुष** से ही होता है—

(9) आपटवम्
नाऽस्य पटवः सन्ति—अपटुः
अपटोर्भावः—त्व, तल् नहीं हुए, अण् हुआ,
आपटो अ सु—आदिवृद्धि, गुण।

(10) आलघवम् (पूर्ववत्)।

**अचतुरादिभ्य०**—चतुर आदि से ये प्रत्यय नहीं होते हैं—

(11) आचतुर्यम्
अचतुरस्य भावः—ष्यञ् हुआ।

(12) आसङ्गत्यम्
पूर्ववत् ष्यञ्।

(13) आलवण्यम् (पूर्ववत्)।
(14) आवट्यम् (पूर्ववत्)।
(15) आयुध्यम् (पूर्ववत्)।
(16) आकत्यम् (पूर्ववत्)।
(17) आरस्यम् (पूर्ववत्)।
(18) आलस्यम् (पूर्ववत्)।

### (2007) पृथ्वादिभ्यः इमनिज्वा *122* (1784)

**पृथु इत्येवमादिभ्यः प्रातिपदिकेभ्य इमनिच् प्रत्ययो भवति वा तस्य भाव इत्येतस्मिन्नर्थे। वावचनमणादेः समावेशार्थम्। पृथोर्भावः प्रथिमा। पार्थवम्। म्रदिमा। मार्दवम्। तुरिष्ठेमेयस्सु (6.4.154), टेः (6.4.155) इति टिलोपः। र ऋतो हलादेर्लघोः (6.4.161) इति रेफादेशः। त्वतलौ सर्वत्र भवत एव। पृथुत्वम्, पृथुता। मृदुत्वम्, मृदुता। पृथु। मृदु। महत्। पटु। तनु। लघु। बहु। साधु। वेणु। आसु। बहुल। गुरु। दण्ड। ऊरु। खण्ड। बाल। अकिञ्चन। होड। पाक। वत्स। मन्द। स्वादु। ह्रस्व। दीर्घ। प्रिय। वृष। ऋजु। क्षिप्र। क्षुप्र। क्षुद्र–पृथ्वादिः।**

**अर्थ**—पृथु आदि प्रातिपदिकों से विकल्प से 'इमनिच्' होता है, भाव अर्थ में। 'वा' का ग्रहण करने से पक्ष में 'अण्' आदि भी होते हैं।

नकारोत्तरवर्ती इकार व अन्त्य चकार की इत् संज्ञा होती है। चित्करण स्वरार्थ है। इमनिच् प्रत्ययान्त शब्द पुँलिंग होता है।

यहाँ अधिकार होने से त्व तथा तल् भी होते हैं।

**उदा०** (1) प्रथिमा

पृथोर्भावः → पृथु इमनिच्—अनुबन्ध लोप,
प्रथु इमन्—'र ऋतो हलादेर्लघोः' से रेफादेश,
प्रथ् इमन् सु—भसंज्ञा, टेः, विभक्तिकार्य।

(2) पार्थवम्
पृथु अण्—पक्ष में,
पार्थो अ—आदिवृद्धि, ओर्गुणः,
पार्थव सु—रूप बना।

(3) प्रदिमा
इमनिच्।

(4) मार्दवम्
अण्।

(5) पृथुत्वम्
त्व आदि सर्वत्र होते हैं।

(6) पृथुता
तल्, टाप्।

(7) मृदुत्वम्
त्व।

(8) मृदुता
तल्, टाप्।

शेष उदाहरण मूल में देखें।

## (2008) वर्णदृढादिभ्यः ष्यञ् च *123* (1787)

**वर्णविशेषवाचिभ्यः प्रातिपदिकेभ्यो दृढादिभ्यश्च ष्यञ् प्रत्ययो भवति चकारादिमनिच्च, तस्य भाव इत्येतस्मिन् विषये। शुक्लस्य भावः शौक्ल्यम्। शुक्लिमा। शुक्लत्वम्। शुक्लता। कार्ष्ण्यम्। कृष्णिमा। कृष्णत्वम्। कृष्णता। दृढादिभ्यः–दार्ढ्यम्। द्रढिमा। दृढत्वम्। दृढता। षकारो ङीषर्थः–औचिती। याथाकामी। दृढ। परिवृढ। भृश। कृश। चक्र। आम्र। लवण। ताम्र। अम्ल। शीत। उष्ण। जड। बधिर। पण्डित। मधुर। मूर्ख। मूक। *वेर्यातलाभमतिमनःशारदानाम्* (ग०सू० 111)। *समो मतिमनसोः जवने* (ग०सू० 112)–दृढादिः।**

**अर्थ**—भाव अर्थ में वर्णवाची तथा दृढादिगणपठित प्रातिपदिकों से 'ष्यञ्' तथा 'इमनिच्' होते हैं।

ष्यञ् के ञकार व षकार की इत्संज्ञा होती है। ञित्करण आदिवृद्धि के लिए है। षित्करण स्त्रीत्व में ङीष् के लिए है।

त्व तथा ष्यञ् प्रत्ययान्त शब्द नपुंसक में होता है। द्र०—त्वष्यञौ तद्धितौ (लिङ्गा०120)। ष्यञ् को षित् करने के द्वारा ज्ञापित होता है कि भावार्थक ष्यञ् प्रत्ययान्त शब्द लक्ष्यानुरोधेन कहीं-कहीं स्त्रीलिङ्ग में भी प्रयुक्त होता है।

उदा० (1) शौक्ल्यम्
शुक्लस्य भावः—ष्यञ्, आदिवृद्धि।

(2) शुक्लिमा
शुक्ल इमनिच् सु।

(3) शुक्लत्वम्
त्व, सु।

(4) शुक्लता
तल्, टाप्।

(5) कार्ष्ण्यम्
कृष्ण ष्यञ्—आदिवृद्धि, सु।

(6) कृष्णिमा
इमनिच्।

(7) कृष्णत्वम्
त्व, सु।

(8) कृष्णता
तल्, टाप्।

(9) दार्ढ्यम्
दृढ ष्यञ्।

(10) द्रढिमा
इमनिच्, सु।

(11) दृढत्वम्
त्व, सु।

(12) दृढता
तल्, टाप्, सु।

'ष्यञ्' में 'ष्' अनुबन्ध स्त्रीत्व में 'ङीष्' के लिए है। यथा—

(13) औचिती
उचित ष्यञ् → औचित्य ङीष्—यकारलोप।
'यस्येति च' से अकारलोप तथा 'हलस्तद्धितस्य' से यकारलोप होता है।

**(2009) गुणवचनब्राह्मणादिभ्यः कर्मणि च *124* (1788)**

**गुणमुक्तवन्तो गुणवचनाः। गुणवचनेभ्यो ब्राह्मणादिभ्यश्च तस्येति षष्ठीसमर्थेभ्यः कर्मण्यभिधेये ष्यञ् प्रत्ययो भवति चकाराद् भावे च। कर्मन्शब्दः क्रियावचनः। जडस्य भावः कर्म वा जाड्यम्। ब्राह्मणादिभ्यः खल्वपि-ब्राह्मण्यम्। आ पादपरिसमाप्तेर्भावकर्माधिकारः। ब्राह्मणादिराकृतिगणः। आदिशब्दः प्रकारवचनः। *चातुर्वर्ण्यादीनां स्वार्थ उपसंख्यानम्* (म०भा०)। चत्वार एव वर्णाश्चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैलोक्यम्। त्रैस्वर्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। सामीप्यम्। औपम्यम्। सौख्यम्। ब्राह्मण। वाडव। माणव। चोर। मूक। आराधय। विराधय। अपराधय। उपराधय। एकभाव। द्विभाव। त्रिभाव। अन्यभाव। समस्थ। विषमस्थ। परमस्थ। मध्यमस्थ। अनीश्वर। कुशल। कपि। चपल। अक्षेत्रज्ञ। निपुण। *अर्हतो नुम् च* (ग०सू० 113)। आर्हन्त्यम्। संवादिन्। संवेशिन्। बहुभाषिन्। बालिश। दुष्पुरुष। कापुरुष। दायाद। विशसि। धूर्त्त। राजन्। सम्भाषिन्। शीर्षपातिन्। अधिपति। अलस। पिशाच। पिशुन। विशाल। गणपति। धनपति। नरपति। गडुल। निव। निधान। विष। *सर्ववेदादिभ्यः स्वार्थे* (ग०सू० 114)। *चतुर्वेदस्योभयपदवृद्धिश्च* (ग०सू० 115)। चातुर्वैद्यम्-ब्राह्मणादिः।**

**अर्थ**—गुण को कहने वाला 'गुणवचन' कहलाता है। षष्ठ्यन्त समर्थ गुणवाचक तथा ब्राह्मणादि प्रातिपदिकों से 'ष्यञ्' होता है, भाव तथा कर्म अर्थों में।

**उदा०** (1) जाड्यम्

जडस्य भावः<br>जडस्य कर्म } जड ष्यञ्—आदिवृद्धि।

(2) ब्राह्मण्यम्

'ष्यञ्' हुआ।

(3) माणव्यम् (पूर्ववत्)।

पाद की समाप्तिपर्यन्त भाव और कर्म का अधिकार है। ब्राह्मणादि गण एक आकृतिगण है। 'आदि' शब्द प्रकारवाची है।

**चातुर्वर्ण्या०**—चातुर्वर्ण्य आदि में शब्दों से स्वार्थ में 'ष्यञ्' होता है—

(4) चातुर्वर्ण्यम्

चत्वार एव वर्णाः—ष्यञ्, आदिवृद्धि।

(5) चातुराश्रम्यम् (पूर्ववत्)।

(6) त्रैलोक्यम् (पूर्ववत्)।

(7) त्रैस्वम् (पूर्ववत्)।

(8) षाड्गुण्यम् (पूर्ववत्)।

(9) सैन्यम्

ष्यञ् हुआ।

(10) सान्निध्यम् (पूर्ववत्)।

(11) सामीप्यम् (पूर्ववत्)।

(12) औपम्यम् (पूर्ववत्)।

(13) सौख्यम् (पूर्ववत्)।

शेष उदाहरण मूल में देखें।

**अर्हतो नुम् च**—अर्हत् शब्द को नुम् आगम होता है—

(14) आर्हन्त्यम्

अर्ह नुम् त् ष्यञ्—आदिवृद्धि,

आर्हन्त्य सु—विभक्तिकार्य।

**चतुर्वेद**—चतुर्वेद शब्द को उभयपदवृद्धि होती है—

(15) चातुर्वैद्यम्

चतुर्वेद ष्यञ्—पूर्ववत्।

**(2010) स्तेनाद्यन्नलोपश्च *125* (1790)**

**स्तेनशब्दात् षष्ठीसमर्थाद्भावकर्मणोर्यत् प्रत्ययो भवति नशब्दस्य लोपश्च भवति। स्तेनस्य भावः कर्म वा स्तेयम्। स्तेनादिति केचिद् योगविभागं कुर्वन्ति। स्तेनात् ष्यञ् भवति-स्तैन्यम्। ततो यन्नलोपश्च। स्तेनादित्येव-स्तेयम्।**

**अर्थ**—षष्ठ्यन्त समर्थ 'स्तेन' प्रातिपदिक से 'यत्' होता है तथा स्तेन के नकार का लोप होता है, भाव और कर्म अर्थों में।

**उदा०** (1) स्तैन्यम्

स्तेन यत्—आदिवृद्धि।

कुछ विद्वान् सूत्र का योगविभाग करते हैं। यथा—

(क) स्तेनात् (ष्यञ्)

इससे 'ष्यञ्' होकर पूर्वोक्त रूप बनता है।

(ख) यन्नलोपश्च

(2) स्तेयम्

स्तेन यत् → स्तेय सु।

(2011) सख्युर्यः *126* (1791)

**सखिशब्दाद् यः प्रत्ययो भवति भावकर्मणोरर्थयोः । सख्युर्भावः कर्म वा सख्यम् । *दूतवणिग्भ्यां चेति वक्तव्यम्* । दूत्यम् । वणिज्यम् । कथं वाणिज्यम् ? ब्राह्मणादित्वात् ।**

**अर्थ**—षष्ठ्यन्त समर्थ सखि प्रातिपदिक से 'य' होता है, भाव और कर्म अर्थों में।

उदा० (1) सख्यम्
सखि य सु।

**दूतवणि०**—दूत और वणिज् शब्दों से 'य' होता है—

(2) दूत्यम्
दूत य सु।

(3) वणिज्यम्
वणिज् य सु।

(4) वाणिज्यम्
ब्राह्मणादि गण में पाठ होने से 'ष्यञ्' हुआ है, आदिवृद्धि होकर रूप बनता है।

(2012) कपिज्ञात्योर्ढक् *127* (1792)

**कपिज्ञातिशब्दाभ्यां ढक् प्रत्ययो भवति भावकर्मणोरर्थयोः । कपेर्भावः कर्म वा कापेयम् । ज्ञातेयम् । *यथासंख्यमर्थयोः सर्वत्रैवात्र प्रकरणे नेष्यते* ।**

**अर्थ**—षष्ठ्यन्त समर्थ कपि तथा ज्ञाति प्रातिपदिकों से 'ढक्' होता है, भाव और कर्म अर्थों में।

उदा० (1) कापेयम्
कपि ढक् → काप् एय सु।
(2) ज्ञातेयम् (पूर्ववत्)।

**यथासं०**—अण् प्रकरण में अर्थों का सर्वत्र यथासंख्य नहीं होता है।

(2013) पत्यन्तपुरोहितादिभ्यो यक् *128* (1793)

**पत्यन्तात् प्रातिपदिकात् पुरोहितादिभ्यश्च यक् प्रत्ययो भवति भावकर्मणोरर्थयोः । सेनापतेर्भावः कर्म वा सैनापत्यम् । गार्हपत्यम् । प्राजापत्यम् । पौरोहित्यम् । राज्यम् । पुरोहित । राजन् । *राजाऽसे* (ग०सू० 116) । संग्रामिक । एषिक । वर्मित । खण्डिक । दण्डिक । छत्रिक । मिलिक । पिण्डिक । बाल । मन्द । स्तनिक । चूडितिक । कृषिक । पूतिक । पत्रिक । प्रतिक । अजानिक । सलनिक । सूचिक । शाक्वर । सूचक । पक्षिक । सारथिक । जलिक । सूतिक । अञ्जलिक । सूचक—पुरोहितादिः ।**

**अर्थ**—पति शब्द है अन्त में जिसके, ऐसे शब्द से तथा पुरोहित शब्द से 'यक्' होता है, भाव तथा कर्म अर्थों में।

उदा० (1) सैनापत्यम्
सेनापति यक्—'किति च' से आदिवृद्धि।
(2) गार्हपत्यम्
'यक्' हुआ।
(3) प्राजापत्यम् (पूर्ववत्)।
(4) पौरोहित्यम् (पूर्ववत्)।
(5) राज्यम्
राजन् यप् सु।
शेष उदाहरण मूल में देखें।

(2014) प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् *129* (1794)

**प्राणभृज्जातिवाचिभ्यः प्रातिपदिकेभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्चाञ् प्रत्ययो भवति भावकर्मणोरर्थयोः । अश्वस्य भावः कर्म वा आश्वम् । औष्ट्रम् । वयोवचनेभ्यः—कौमारम् । कैशोरम् । उद्गात्रादिभ्यः—औद्गात्रम् । औन्नेत्रम् । उद्गातृ । उन्नेतृ । प्रतिहर्तृ । रथगणक । पक्षिगणक । सुष्ठु । दुष्ठु । अध्वर्यु । वधू । *सुभगमन्त्रे* (ग०सू० 117)- उद्गात्रादिः ।**

**अर्थ**—षष्ठी समर्थ जीवधारी जातिवाचक शब्द से, अवस्थावाची शब्द से तथा उद्गात्रादि प्रातिपदिकों से 'अञ्' प्रत्यय होता है भाव तथा कर्म अर्थों में।

उदा० (1) आश्वम्
अश्व अञ् सु—आदिवृद्धि।

(2) औष्ट्रम्
उष्ट्र अञ्।

(3) कौमारम्
कुमार अञ्।

(4) कैशोरम्
किशोर अञ्।

(5) औद्गात्रम्
उद्गातृ अञ्।
(6) औन्नेत्रम्
उन्नेतृ अञ्।
शेष उदाहरण मूल में देखें।

(2015) हायनान्तयुवादिभ्योऽण् *130* (1795)

हायनान्तेभ्यः प्रातिपदिकभ्यो युवादिभ्यश्चाण् प्रत्ययो भवति भावकर्मणोरर्थयोः। द्विहायनस्य भावः कर्म वा द्वैहायनम्। त्रैहायनम्। युवादिभ्यः-यौवनम्। स्थाविरम्। *श्रोत्रियस्य यलोपश्च वाच्यः* (म०भा०)। श्रोत्रियस्य भावः कर्म वा श्रौत्रम्। युवन्। स्थविर। होतृ। यजमान। कमण्डलु। *पुरुषासे* (ग०सू० 118)। सुहृत्। यातृ। श्रवण। कुस्त्री। सुस्त्री। सुहृदय। सुभ्रातृ। वृषल। दुर्भ्रातृ। *हृदयासे*। क्षेत्रज्ञ। कृतक। परिव्राजक। कुशल। चपल। निपुण। पिशुन। सब्रह्मचारिन्। कुतूहल। अनृशंस-युवादिः।

अर्थ—हायन शब्द है अन्त में जिसके, ऐसे शब्द से तथा युवादि प्रातिपदिकों से 'अण्' होता है, भाव तथा कर्म अर्थों में।

उदा० (1) द्वैहायनम्
द्विहायन अण्।
(2) त्रैहायनम्
त्रिहायन अण्।
(3) यौवनम्
युवन् अण्।
(4) स्थाविरम्
स्थविर अण्।

श्रोत्रियस्य०—श्रोत्रिय शब्द के 'य' का लोप होता है—
(5) श्रौत्रम्
श्रोत्रिय अ → श्रोत्रि अ → श्रोत्र् अ सु।
शेष उदाहरण मूल में देखें।

(2016) इगन्ताच्च लघुपूर्वात् *131* (1796)

इगन्ताच्च लघुपूर्वादण् प्रत्ययो भवति भावकर्मणोः। लघुपूर्वग्रहणेन प्रातिपदिकसमुदायो विशेष्यते, लघुः पूर्वोऽवयवोऽस्येति लघुपूर्वः। कुतः पुनरसौ लघुः पूर्वः? इक्सन्निधानादिक इति विज्ञायते। लघुः पूर्वो यस्मादिकस्तदन्तात्प्रातिपदिकादित्ययमर्थो विवक्षितः। अपरे तत्पुरुषकर्मधारयं वर्णयन्ति-इक् चासावन्तश्चेतीगन्तः, लघुपूर्वग्रहणेन स एव विशेष्यते पश्चात्तेन प्रातिपदिकस्य तदन्तविधिरिति। अस्मिन् व्याख्यानेऽन्तग्रहणमतिरिच्यते, लघुपूर्वादिक इत्येतावदेव वाच्यं स्यात्। शुचेर्भावः कर्म वा शौचम्। मौनम्। नागरम्। हारीतकम्। पाटवम्। लाघवम्। इगन्तादिति किम्? घटत्वम्, पटत्वम्। लघुपूर्वादिति किम्? कण्डूत्वम्, पाण्डुत्वम्। कथं काव्यमिति? ब्राह्मणादिषु कविशब्दो द्रष्टव्यः।

अर्थ—लघु वर्ण है पूर्व में जिसके तथा इक् वर्ण है अन्त में जिसके, ऐसे षष्ठ्यन्त समर्थ प्रातिपदिक से 'अण्' होता है, भाव तथा कर्म अर्थों में। 'त्व' तथा 'तल्' भी होते हैं। पूर्व अवयव है लघु जिसका, वह 'लघुपूर्व' कहलाता है। कुछ विद्वान् तत्पुरुष कर्मधारय मानते हैं। यथा—

इक् चाऽसावन्तश्च—इगन्तः।

लघुपूर्व ग्रहण से उसी को विशेषित किया जाता है। पश्चात् उससे प्रातिपदिक की तदन्तविधि होती है। इस व्याख्यान में अन्तग्रहण अधिक है। 'लघुपूर्वादिक' इतना ही कहना चाहिए।

उदा० (1) शौचम्
शुचेर्भावः (कर्म वा)—शुचि अण्—आदिवृद्धि,
शौच अ सु—विभक्तिकार्य।
(2) मौनम्
मुनि अण् सु।
(3) नागरम्
नगर अण् सु।
(4) हारीतकम्
हरीत अण्।
(5) पाटवम्
पटु अण्।
(6) लाघवम्
लघु अण्।

इगन्त० अर्थात् इक् है अन्त में जिसके, ऐसे प्रातिपदिक से प्रत्यय होता है—
(7) घटत्वम्
अण् नहीं हुआ।

लघुपूर्व० अर्थात् लघु वर्ण है पूर्व में जिसके, ऐसे प्रातिपदिक से प्रत्यय होता है—

(8) कण्डुत्वम्
अण् नहीं हुआ।

(9) पाण्डुत्वम्
अण् नहीं हुआ।

(10) काव्यम्
ब्राह्मणादिगण में पाठ होने से अण् नहीं हुआ, 'ष्यञ्' हुआ।

## (2017) योपधाद् गुरूपोत्तमाद्वुञ् *132* (1797)

**त्रिप्रभृतीनामन्तस्य समीपमुपोत्तमम्, गुरु उपोत्तमं यस्य तद् गुरूपोत्तमम्। यकारोधाद् गुरूपोत्तमाद् वुञ् प्रत्ययो भवति भावकर्मणोः। रमणीयस्य भावः कर्म वा रामणीयकम्। वासनीयकम्। योपधादिति किम्? विमानत्वम्। गुरूपोत्तमादिति किम्? क्षत्रियत्वम्। *सहायाद्वेति वक्तव्यम्*। साहायकम्। साहाय्यम्।**

अर्थ—अन्त के जो समीप है, उसे 'उपोत्तम' कहते हैं। जिसका उपोत्तम गुरु वर्ण है, उसे 'गुरूपोत्तम' कहते हैं। यकार है उपधा में जिसके, ऐसे गुरु उपोत्तम वाले प्रातिपदिक से 'वुञ्' होता है, भाव व कर्म अर्थों में।

उदा० (1) रामणीयकम्
रमणीय वुञ्—आदिवृद्धि, युवोरनाकौ।

(2) वासनीयकम् (पूर्ववत्)।

योपधा० अर्थात् यकार उपधा वाले प्रातिपदिक से 'वुञ्' होता है—

(3) विमानत्वम्
'वुञ्' नहीं हुआ।

गुरुपोत्त० अर्थात् गुरु उपोत्तम वाले प्रातिपदिक से 'वुञ्' होता है—

(4) क्षत्रियत्वम्
'वुञ्' नहीं हुआ।

सहायाद्वे०—सहाय शब्द से विकल्प से 'वुञ्' होता है—

(5) साहायकम्
वुञ् हुआ।

(6) साहाय्यम्
पक्ष में 'ष्यञ्' हुआ।

## (2018) द्वन्द्वमनोज्ञादिभ्यश्च *133* (1798)

**द्वन्द्वसंज्ञकेभ्यो मनोज्ञादिभ्यश्च वुञ् प्रत्ययो भवति भावकर्मणोः। गोपालपशुपालानां भावः कर्म वा गौपालपशुपालिका। शैष्योपाध्यायिका। कौत्सकुशिकिका। मनोज्ञादिभ्यः–मानोज्ञकम्! काल्याणकम्। मनोज्ञ। कल्याण। प्रियरूप। छान्दस। छात्र। मेधाविन्। अभिरूप। आढ्य। कुलपुत्र। श्रोत्रिय। चौर। धूर्त्त। वैश्वदेव। युवन्। ग्रामपुत्र। ग्रामखण्ड। ग्रामकुमार। अमुष्यपुत्र। अमुष्यकुल। शतपुत्र। कुशल–मनोज्ञादिः।**

अर्थ—द्वन्द्वसंज्ञक तथा मनोज्ञादि षष्ठी समर्थ प्रातिपदिकों से 'वुञ्' होता है, भाव तथा कर्म अर्थों में।

उदा० (क) द्वन्द्वात्—
(1) गौपालपशुपालिका
गोपालपशुपाल वुञ्—आदिवृद्धि, टाप् सु।

(2) शैष्योपाध्यायिका
शिष्योपाध्याय वुञ्।

(3) कौत्सकुशिकिका
कुत्सकुशिक वुञ्।

(ख) मनोज्ञादिभ्यः—
(4) मानोज्ञकम्
मनोज्ञ वुञ्।

(5) काल्याणकम्
कल्याण वुञ्।

शेष उदाहरण मूल में देखें।

## (2019) गोत्रवरणाच्छ्लाघात्याकारतदवेतेषु *134* (1799)

**गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति प्रत्येकं भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु। तत्र श्लाघा विकत्थनम्। अत्याकारः पराधिक्षेपः। तदवेत-स्तत्प्राप्तस्तज्ज्ञो वा। तदिति गोत्रचरणयोर्भावकर्मणी निर्दिश्येते, तत्प्राप्तस्तदवगतवान् तदवेत इत्युच्यते। श्लाघायां तावत्–गार्गिकया श्लाघते। काठिकया श्लाघते। गार्ग्यत्वेन कठत्वेन च विकत्थत इत्यर्थः। अत्याकारे–गार्गिकयात्याकुरुते। काठिकयात्याकुरुते। गार्ग्यत्वेन कठत्वेन च परानधिक्षिपतीत्यर्थः। तदवेतः–गार्गिकामवेतः। काठि-**

**कामवेतः । गार्ग्यत्वं कठत्वं च प्राप्त इत्यर्थः । तद्वाऽवगतवानित्यर्थः । श्लाघादिष्विति किम् ? गार्ग्यत्वम्, कठत्वम् ।**

**अर्थ**—भाव तथ कर्म अर्थों में प्रशंसा, अपमान तथा उससे युक्त—इन विषयों में गोत्रवाची तथा चरणवाची षष्ठी समर्थ शब्दों से 'वुञ्' होता है। श्लाघा = प्रशंसा। अत्याकार = अपमान। तदवेत = उससे युक्त।

**उदा० (क) श्लाघायाम्—**
(1) गार्गिकया श्लाघते
वुञ् हुआ।

(2) काठिकया श्लाघते (पूर्ववत्)।

**(ख) अत्याकारे—**
(3) गार्गिकयाऽत्याकुरुते (पूर्ववत्)।
(4) काठिकयाऽत्याकुरुते (पूर्ववत्)।

**(ग) तदवेतः—**
(5) गार्गिकाम् अवेतः (पूर्ववत्)।
(6) काठिकाम् अवेतः (पूर्ववत्)।

**श्लाघादि०** अर्थात् श्लाघा आदि विषयों में 'वुञ्' होता है—

(7) गार्ग्यत्वम्
वुञ् नहीं हुआ।

(8) कठत्वम्
वुञ् नहीं हुआ।

### (2020) होत्राभ्यश्छः *135* (1800)

**होत्राशब्द ऋत्विग्विशेषवचनः । ऋत्विग्विशेषवाचिभ्यश्छः प्रत्ययो भवति भावकर्मणोः । अच्छावाकस्य भावः कर्म वाऽच्छावाकीयम् । मित्रावरुणीयम् । ब्राह्मणाच्छंसीयम् । आग्नीध्रीयम् । प्रतिप्रस्थात्रीयम् । त्वाष्ट्रीयम् । पोत्रीयम् । बहुवचनं स्वरूपविधिनिरासार्थम् ।**

**अर्थ**—'होत्रा' शब्द ऋत्विज् विशेष का वाचक है। षष्ठी समर्थ ऋत्विग् विशेषवाची प्रातिपदिक से 'छ' प्रत्यय होता है, भाव तथा कर्म अर्थों में।

**उदा०** (1) अच्छावाकीयम्
अच्छावाक छ सु—ईयादेश।

(2) मित्रावरुणीयम्
मित्रावरुण छ—पूर्ववत्।

(3) ब्राह्मणाच्छंसीयम् (पूर्ववत्)।
(4) प्रतिप्रस्थात्रीयम् (पूर्ववत्)।
(5) त्वष्ट्रीयम्
त्वष्टृ छ।
(6) पोत्रीयम्
पोतृ छ।

स्वरूपविधि के निरास के लिए बहुवचन का निर्देश है।

### (2021) ब्रह्मणस्त्वः *136* (1801)

**होत्राभ्य इत्यनुवर्त्तते । ब्रह्मन्शब्दाद्धोत्रावाचिनस्त्वः प्रत्ययो भवति भावकर्मणोः । छस्यापवादः । ब्रह्मणो भावः कर्म वा ब्रह्मत्वम् । नेति वक्तव्ये त्ववचनं तलो बाधनार्थम् । यस्तु जातिशब्दो ब्राह्मणपर्यायो ब्रह्मन् शब्दस्ततस्त्वतलौ भवत एव—ब्रह्मत्वम्, ब्रह्मता । भवनावधिकयोर्नञ्स्नञोरधिकारः समाप्तः ।**

**इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ**
**पञ्चमाध्यायस्य प्रथमः पादः ॥**

**अर्थ**—षष्ठी समर्थ होत्रावाची प्रातिपदिक से 'त्व' होता है, भाव व कर्म अर्थों में। यह 'छ' का अपवाद है।

**उदा०** (1) ब्रह्मत्वम्
त्व, सु।

**नेति वक्तव्ये०**—'न' ऐसा कहना चाहिए। 'तल्' के बाध के लिए 'त्व' का विधान किया गया है। यह जो ब्राह्मणवाची जातिशब्द 'ब्रह्मन्' है, उससे 'त्व' तथा 'तल्' होते ही हैं। यथा—

(2) ब्रह्मत्वम्
त्व, नकारलोप।

(3) ब्रह्मता
तल् टाप्।

'भवन' तक चलने वाला नञ् व स्नञ् का अधिकार समाप्त होता है।

इति पण्डितेश्वरचन्द्रविरचितायां काशिकायाः सोमलेखाऽऽख्यायां हिन्दीटीकायां
पञ्चमाऽध्यायस्य प्रथमः पादः समाप्तः।



# पञ्चमाऽध्यायस्य द्वितीयः पादः

**(2022) धान्यानां भवने क्षेत्रे खञ् *1* (1802)**

**निर्देशादेव समर्थविभक्तिः । धान्यविशेषवाचिभ्यः षष्ठी-समर्थेभ्यो भवनेऽभिधेये खञ् प्रत्ययो भवति तच्चेद्भवनं क्षेत्रं भवति । भवनमिति-भवन्ति = जायन्तेऽस्मिन्निति भवनम् । मुद्-गानां भवनं क्षेत्रं मौद्गीनम् । कौद्रवीणम् । कौलत्थीनम् । धान्यानामिति किम् ? तृणानां भवनं क्षेत्रमित्यत्र न भवति । क्षेत्रमिति किम् ? मुद्गानां भवनं कुशूलम् । बहुवचनं स्वरूप-विधिनिरासार्थम् ।**

**अर्थ**—निर्देश से ही समर्थ विभक्ति है। धान्यविशेषवाची षष्ठी समर्थ प्रातिपदिक से 'खञ्' होता है, 'उत्पत्तिस्थान खेत' अर्थ में।

**उदा०** (1) मौद्गीनम्
मुद्गानां भवनं क्षेत्रम्—खञ् हुआ,
मौद्ग ईन सु—ईन आदेश, सु।

(2) कौद्रवीणम्
कोद्रव खञ् सु।

(3) कौलत्थीनम्

**धान्यानां०** अर्थात् धान्यवाची प्रातिपदिक से प्रत्यय होता है—
तृणानां भवनं क्षेत्रम्—यहाँ 'खञ्' नहीं हुआ।

**क्षेत्रमि०** अर्थात् खेत अर्थवाच्य हो तो प्रत्यय होता है—
मुद्गानां भवनं कुशूलम्—यहाँ प्रत्यय नहीं हुआ।
स्वरूपविधि के निरास के लिए बहुवचन का निर्देश है।

**(2023) व्रीहिशाल्योर्ढक् *2* (1803)**

**व्रीहिशालिशब्दाभ्यां ढक् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये । खञोऽपवादः । व्रीहीणां भवनं क्षेत्रं व्रैहेयम् । शालेयम् ।**

**अर्थ**—षष्ठी समर्थ धान्यविशेषवाची व्रीहि और शालि प्रातिपदिकों से 'ढक्' होता है, 'उत्पत्तिस्थान खेत' अर्थ हो तो। यह 'खञ्' का अपवाद है।

**उदा०** (1) व्रैहेयम्
व्रीहि ढक्—आदिवृद्धि, एयादेश।

(2) शालेयम्
शालि ढक्—पूर्ववत्।

**(2024) यवयवकषष्टिकाद्यत् *3* (1804)**

**यवादिभ्यः शब्देभ्यो यत् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये । खञोऽपवादः । यवानां भवनं क्षेत्रं यव्यम् । यवक्यम् । षष्टिक्यम् ।**

**अर्थ**—षष्ठी समर्थ धान्यविशेषवाची यव, यवक तथा षष्टिक शब्दों से 'यत्' होता है, 'उत्पत्तिस्थान खेत' अर्थ हो तो। यह 'खञ्' का अपवाद है।

**उदा०** (1) यव्यम्
यवानां भवनं क्षेत्रम्—यव यत् सु।

(2) यवक्यम्
यवक यत् सु।

(3) षष्टिक्यम् (पूर्ववत्)।

**(2025) विभाषा तिलमाषोमाभङ्गाणुभ्यः *4* (1805)**

**तिल माष उमा भङ्गा अणु-इत्येतेभ्यो विभाषा यत् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये । खञि प्राप्ते वचनम् । पक्षे सोऽपि भवति । उमाभङ्गयोरपि धान्यत्वमाश्रितमेव । तिल, माष, उमा, भङ्गा, अणु-एषां भवनं क्षेत्रं तिल्यम्, तैलीनम्; माष्यम्, माषीणम्; उम्यम्, औमीनम्; भङ्ग्यम्, भाङ्गीनम्; अणव्यम्, आणवीनम् ।**

**अर्थ**—षष्ठी समर्थ धान्यविशेषवाची तिल, माष, उमा, भंगा तथा अणु प्रातिपदिकों से 'यत्' प्रत्यय विकल्प से होता है, 'उत्पत्ति-स्थान खेत' अर्थ हो तो। 'खञ्' प्राप्त होने पर यह विकल्प से विधान किया गया है। पक्ष में वह भी होता है। 'उमा' तथा 'भंगा' की भी धान्यता कही गई है।

**उदा०** (1) तिल्यम्
तिलानां भवनं क्षेत्रम्—'यत्' हुआ,
तिल यत् सु—विभक्तिकार्य।

(2) तैलीनम्
पक्ष में 'खञ्' हुआ।

(3) माष्यम्
माष यत्।

(4) माषीणम्
खञ्, णत्व।

(5) उम्यम्
उमा यत्।

(6) औमीनम्
उमा खञ्।

(7) भङ्ग्यम्
भङ्गा यत्।

8) भाङ्गीनम्
भङ्गा खञ्।

(9) अणव्यम्
अणु यत्।

(10) आणवीनम्
अणु खञ्।

### (2026) सर्वचर्मणः कृतः खखञौ *5* (1806)

**सर्वचर्मन्शब्दात्तृतीयासमर्थात् कृत इत्यस्मिन्नर्थे खखञौ प्रत्ययौ भवतः। सर्वशब्दश्चात्र प्रत्ययार्थेन कृतेन सम्बध्यते, न चर्मणा। तत्रायमसमर्थसमासो द्रष्टव्यः। सर्वश्चर्मणा कृत इत्येतस्मिन् वाक्यार्थे वृत्तिः। सर्वचर्मीणः। सार्वचर्मीणः।**

**अर्थ**—तृतीया समर्थ सर्वचर्मन् प्रातिपदिक से 'ख' और 'खञ्' होते हैं, 'किया हुआ' इस अर्थ में। सर्व शब्द का प्रत्ययार्थ कृत के साथ सम्बन्ध है, चर्मन् के साथ नहीं। यहाँ असमर्थ समास है।

**उदा०** (1) सर्वचर्मीणः
सर्वचर्मणा कृतः—'ख' हुआ।
सर्वचर्मन् ईन सु—टि का लोप, विभक्तिकार्य।

(2) सार्वचर्मीणः
सर्वचर्मन् खञ्—आदिवृद्धि, णत्व।

### (2027) यथामुखसम्मुखस्य दर्शनः खः *6* (1807)

**यथामुखशब्दात् सम्मुखशब्दाच्च षष्ठीसमर्थाद्दर्शन इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। दृश्यतेऽस्मिन्निति दर्शनः, आदर्शादिः प्रतिबिम्बाश्रय उच्यते। निपातनात्सादृश्येऽव्ययीभावः–मुखस्य सदृशम् यथामुखम्। यथामुखं दर्शनः यथामुखीनः। सर्वस्य मुखस्य दर्शनः सम्मुखीनः।**

**अर्थ**—षष्ठी समर्थ यथामुख तथा सम्मुख प्रातिपदिकों से 'ख' होता है, 'दर्शन' अर्थ में। आदर्श आदि प्रतिविम्ब का आश्रय कहा जाता है। निपातन से असादृश्य अर्थ में अव्ययीभाव हुआ है।

**उदा०** (1) यथामुखीनः
यथामुखं दर्शनः—ख, ईन।

(2) सम्मुखीनः
सर्वस्य मुखस्य दर्शनः—पूर्ववत्।

### (2028) तत्सवदिः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति *7* (1808)

**तदिति द्वितीया समर्थविभक्तिः। व्याप्नोतीति प्रत्ययार्थः। परिशिष्टं प्रकृतिविशेषणम्। सवदिः प्रातिपदिकात् पथिन्, अङ्ग, कर्मन्, पत्र, पात्र–इत्येवमन्ताद् द्वितीयासमर्थाद् व्याप्नोतीत्यस्मिन्नर्थे खः प्रत्ययो भवति। सर्वपथं व्याप्नोति सर्वपथीनो रथः। सर्वाङ्गीणस्तापः। सर्वकर्मीणः पुरुषः। सर्वपत्रीणः सारथिः। सर्वपात्रीण ओदनः।**

**अर्थ**—'तद्' यह द्वितीया समर्थ विभक्ति है। व्याप्त होता है—यह प्रत्ययार्थ है। शेष प्रकृतिविशेषण है। द्वितीया समर्थ सर्व शब्द वाले पथिन्, अंग, कर्म, पत्र तथा पात्र प्रातिपदिकों से 'ख' होता है, 'व्याप्त होता है'—अर्थ में।

**उदा०** (1) सर्वपथीनः
सर्वपथं व्याप्नोति।

(2) सर्वाङ्गीणः
सर्वाङ्ग ख—णत्व।

(3) सर्वकर्मीणः
सर्वकर्मन् ख।

(4) सर्वपत्रीणः (पूर्ववत्)।

(5) सर्वपात्रीणः
सर्वपात्र ख।

### (2029) आप्रपदं प्राप्नोति *8* (1809)

**प्रपदमिति पादस्याग्रमुच्यते, आङ् मर्यादायाम्, तयोरव्ययीभावः। आप्रपदशब्दात्तदिति द्वितीयासमर्थात् प्राप्नोतीत्यस्मिन्नर्थे**

खः प्रत्ययो भवति । आप्रपदं प्राप्नोति आप्रपदीनः पटः । शरीरेणासम्बद्धस्यापि पटस्य प्रमाणमाख्यायते ।

अर्थ—पैर के अगले हिस्से को 'प्रपद' कहा जाता है। मर्यादा अर्थ में 'आङ्' का प्रयोग है। उनका अव्ययीभाव समास हुआ। द्वितीया समर्थ आप्रपद शब्द से 'ख' होता है, 'व्याप्त होता है'—इस अर्थ में।

उदा० (1) आप्रपदीनः पटः
आप्रपदं व्याप्नोति—ख
आप्रपद ईन सु—विभक्तिकार्य।
= वह वस्त्र जो टखने तक पहुँचे।

### (2030) अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु *9* (1810)

अनुपदादिभ्यः शब्देभ्यस्तदिति द्वितीयासमर्थेभ्यो यथासंख्यं बद्धा, भक्ष्यति, नेय-इत्येतेष्वर्थेषु खः प्रत्ययो भवति । अनुरायामे सादृश्ये वा । अनुपदं बद्धाऽनुपदीना उपानत् । पदप्रमाणेत्यर्थः । सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः । अयः प्रदक्षिणम्, अनयः प्रसव्यम् । प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन् परशारैः पदानामसमावेशः सोऽयानयः । अयानयं नेयोऽयानयीनः शारः (म० भा०) । फलकशिरसि स्थित इत्यर्थः ।

अर्थ—बद्ध, खाता है तथा ले लाने योग्य—इन अर्थों में यथासंख्य करके द्वितीया समर्थ अनुपद, सर्वान्न तथा अयानय प्रातिपदिकों से 'ख' होता है। 'अनु' आयाम अथवा सादृश्य अर्थ में है।

उदा० (1) अनुपदीना उपानत्
अनुपदं बद्धा—ख, टाप्।

(2) सर्वान्नीनः
सर्वान्न ख।

(3) अयानयीनः
ख—पूर्ववत्।

### (2031) परोवरपरम्परपुत्रपौत्रमनुभवति *10* (1811)

परोवर, परम्पर, पुत्रपौत्र-इत्येतेभ्यस्तदिति द्वितीयासमर्थेभ्योऽनुभवतीत्येतस्मिन्नर्थे खः प्रत्ययो भवति । परोवरेति परस्योत्वं प्रत्ययसन्नियोगेन निपात्यते । परांश्चावरांश्चानुभवति परोवरीणः (म० भा०) । परपरतराणां च परम्परभावो निपात्यते । परांश्च परतरांश्चानुभवति परम्परीणः । पुत्रपौत्राननुभवति पुत्रपौत्रीणः । परम्परशब्दो विनापि प्रत्ययेन दृश्यते-मन्त्रिपरम्परा मन्त्रं भिनत्तीति । तच्छब्दान्तरमेव द्रष्टव्यम् ।

अर्थ—द्वितीया समर्थ परोवर, परम्पर तथा पुत्रपौत्र प्रातिपदिकों से 'ख' होता है, 'अनुभव करता है'—इस अर्थ में।

उदा० (1) परोवरीणः
परांश्चाऽवरांश्चानुभवति—'ख' हुआ,
परोवर ईन सु—निपातन से 'उत्व' हुआ।

(2) परम्परीणः
परांश्च परतरांश्चाऽनुभवति—'ख' हुआ,
परम्परीण सु—निपातन से प्रकृति को 'परम्पर' हुआ, विभक्तिकार्य।

(3) पुत्रपौत्रीणः
पुत्रपौत्र ख—पूर्ववत्।

परम्पर शब्द विना प्रत्यय भी दृष्टिगोचर होता है। यथा—मन्त्रिपरम्परा मन्त्रं भिनत्ति।

### (2032) अवारपारात्यन्तानुकामं गामी *11* (1812)

अवारपार ते अत्यन्त, अनुकाम-इत्येतेभ्यो द्वितीयासमर्थेभ्यो गामीत्येतस्मिन्नर्थे खः प्रत्ययो भवति । गमिष्यतीति गामी, भविष्यति गम्यादय (3.3.3) इति । अकेनोर्भविष्यदाधमर्ण्ययोरिति (3.2.70) षष्ठीप्रतिषेधः-अवारपारं गामी अवारपारीणः । *विपरीताच्च* । पारावारीणः । विगृहतादपीष्यते-अवारीणः । पारीणः । अत्यन्तं गामी अत्यन्तीनः । भृशं गन्तेत्यर्थः । अनुकामं गामी अनुकामीनः । यथेष्टं गन्तेत्यर्थः ।

अर्थ—द्वितीया समर्थ अवारपार, अत्यन्त तथा अनुकाम प्रातिपदिकों से 'ख' होता है, 'भविष्य में जाने वाला'—इस अर्थ में। 'अकेनोर्भ०' से षष्ठी का निषेध होता है—

उदा० (1) अवारपारीणः
अवारपार ख सु।

विपरीताच्च अर्थात् विपरीत क्रम से भी प्रत्यय होता है—

(2) पारावारीणः
पारावार ख।

**विगृहीता०**—विगृहीत दशा में भी प्रत्यय होता है—

(3) अवारीणः
अवार ख।

(4) अत्यन्तीनः
अत्यन्त ख।

(5) अनुकामीनः
अनुकाम ख।

## (2033) समांसमां विजायते *12* (1813)

**समांसमामिति वीप्सा, सुबन्तसमुदायः प्रकृतिः। विजायते-गर्भं धारयतीति प्रत्ययार्थः। गर्भधारणेन सकलापि समा व्याप्यत इति अत्यन्तसंयोगे द्वितीया (2.1.29)। समांसमां विजायते समांसमीना गौः। समांसमीना वडवा। *पूर्वपदे सुपोऽलुग्वक्तव्यः* (म०भा०)। केचित्तु समायां समायां विजायत इति विगृह्णन्ति। गर्भमोचने तु विजनिर्वर्त्तत इत्याहुः। तेषां पूर्वपदे यलोपमात्र निपात्यते, परिशिष्ट-स्यालुग्वक्तव्यः। *अनुत्पत्तावुत्तरपदस्य च वा यलोपो वक्तव्यः* (म०भा०)। समां समां विजायते। समायां समायां विजायत इति वा।**

**अर्थ**—'समां समाम्' यह वीप्सा अर्थ में सुबन्त समुदायरूप प्रकृति है। गर्भ को धारण करता है—यह प्रत्ययार्थ है। गर्भधारण के द्वारा समग्र समा व्याप्त होती है—अतः अत्यन्त संयोग में द्वितीया होती है। द्वितीया समर्थ समांसमां प्रातिपदिक से 'ख' होता है, 'बच्चा जनती है'—इस अर्थ में।

**उदा०** (1) समांसमीना
समांसमां विजायते—ख, टाप् हुआ।

**पूर्वपदे०**—पूर्वपद में सुप् का अलुक् होता है। कुछ विद्वान् निम्नलिखित प्रकार से भी विग्रह करते हैं—
समायां समायां विजायते।

गर्भमोचन अर्थ में 'विजनि' वर्त्तमान है—ऐसा कहते हैं। उनका पूर्वपद में यलोप मात्र का निपातन होता है। शेष का अलुक् ही होता है।

**अनुत्पत्ता०**—यदि 'ख' प्रत्यय नहीं होता है तो उत्तरपद का तथा पूर्वपद के 'य' का विकल्प से लुक् होता है—

समांसमां विजायते।
समायां समायां विजायते।

## (2034) अद्यश्वीनावष्टब्धे *13* (1814)

**विजायत इति वर्त्तते। अद्यश्वीन इति निपात्यते अवष्टब्धे विजने-आसन्ने प्रसवे। आविदूर्ये हि मूर्धन्यो विधीयते-अवाच्चालम्बनाविदूर्ययोरिति (8.3.68)। अद्य वा श्वो वा विजायतेऽद्यश्वीना गौः। अद्यश्वीना वडवा। केचित्तु विजायत इति नानुवर्त्तते, अवष्टब्धमात्रे निपातनमित्याहुः। अद्यश्वीनं मरणम्। अद्यश्वीनो वियोग इति।**

**अर्थ**—'विजायते' का अनुवर्त्तन है। 'आसन्न प्रसव' वाच्य हो तो 'अद्यश्वीन' शब्द निपातित किया जाता है। 'अवाच्चाऽऽलम्बनाऽविदूर्ययोः' के द्वारा अविदूर्य अर्थ में षत्व का विधान किया जाता है।

**उदा०** (1) अद्यश्वीना
अद्य वा श्वो वा विजायते—'ख' हुआ,
अद्यश्वस् ख—टिलोप,
अद्यश्वीन टाप् सु—विभक्तिकार्य।

कुछ विद्वान् 'विजायते' का अनुवर्त्तन नहीं करते हैं। उनके अनुसार अवष्टब्धमात्र में निपातन होता है। यथा—

(2) अद्यश्वीनं मरणम्।
(3) अद्यश्वीनो वियोगः।

## (2035) आगवीनः *14* (1815)

**आगवीन इति निपात्यते। आङ्पूर्वाद् गोशब्दाद्, आ तस्य गोः प्रतिपादनात् कर्मकारिणि खः प्रत्ययो निपात्यते (म०भा०)। आगवीनः कर्मकरः, यो गवा भृतः कर्म करोति आ तस्य गोः प्रत्यर्पणात्।**

**अर्थ**—'आगवीन' शब्द का निपातन किया जाता है, 'सेवक' अर्थ में।

**उदा०** (1) आगवीनः
आङ् गो ख—ईन आदेश।
= गाय के बदले रक्खा गया सेवक।

## (2036) अनुग्वलङ्गामी *15* (1816)

**गोः पश्चाद् अनुगु। अनुगुशब्दादलङ्गामीत्यस्मिन्नर्थे खः प्रत्ययो भवति। अनुगु पर्याप्तं गच्छति अनुगवीनो गोपालकः।**

**अर्थ**—द्वितीया समर्थ 'अनुगु' प्रातिपदिक से 'ख' होता है, 'पर्याप्त जाता है'—इस अर्थ में।

उदा० (1) अनुगवीनः
अनुगु पर्याप्तं गच्छति—'ख' हुआ।

### (2037) अध्वनो यत्खौ *16* (1817)

**तदिति द्वितीयासमर्थविभक्तिरनुवर्त्तते। अलङ्गामीति च प्रत्ययार्थः। अध्वन्शब्दाद् द्वितीयासमर्थादलङ्गामीत्येतस्मिन्नर्थे यत्खौ प्रत्ययौ भवतः। अध्वानमलङ्गामी अध्वनीनः। अध्वन्यः। ये चाभावकर्मणोः (6.4.168), आत्माध्वानौ ख (6.4.169) इति प्रकृतिभावः।**

**अर्थ**—द्वितीया समर्थ 'अध्वन्' प्रातिपदिक से 'यत्' तथा 'ख' प्रत्यय होते हैं, 'पर्याप्त जाता है'—इस अर्थ में।

उदा० (1) अध्वनीनः
अध्वानमलङ्गामी → अध्वन् ख—ईन आदेश।

(2) अध्वन्यः
अध्वन् यत्—ये चाऽभावकर्मणोः, आत्माऽध्वानौ ख से प्रकृतिभाव।

### (2038) अभ्यमित्राच्छ च *17* (1818)

**अभ्यमित्रशब्दाद् द्वितीयासमर्थादलङ्गामीत्येतस्मिन्नर्थे छः प्रत्ययो भवति, चकाराद्यत्खौ च। अभ्यमित्रमलङ्गामी अभ्यमित्रीयः। अभ्यमित्र्यः। अभ्यमित्रीणः। अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः।**

**अर्थ**—पर्याप्त जाता है—इस अर्थ में द्वितीया समर्थ 'अभ्यमित्र' शब्द से छ, यत् और ख प्रत्यय पर्यायेण होते हैं।

उदा० (1) अभ्यमित्रीयः
अभ्यमित्रम् अलङ्गामी—'छ' हुआ।

(2) अभ्यमित्र्यः
'यत्' हुआ।

(3) अभ्यमित्रीणः
'ख' हुआ।

### (2039) गोष्ठात् खञ् भूतपूर्वे *18* (1819)

**गावस्तिष्ठन्त्यत्रेति गोष्ठम्, गोष्ठशब्देन सन्निहितगोसमूहो देश उच्यते, भूतपूर्वग्रहणं तस्यैव विशेषणम्। गोष्ठशब्दाद् भूतपूर्वोपाधिकात् स्वार्थे खञ् प्रत्ययो भवति। गोष्ठो भूतपूर्वः गौष्ठीनो देशः। भूतपूर्वग्रहणं किम्? गोष्ठो वर्त्तते।**

**अर्थ**—गावस्तिष्ठन्त्यत्र—गोष्ठ। गोष्ठ शब्द के द्वारा सन्निहित गोसमूह देश कहा जाता है। 'भूतपूर्व' उसका ही विशेषण है। भूतपूर्व अर्थ में वर्त्तमान गोष्ठ प्रातिपदिक से 'खञ्' होता है।

उदा० (1) गौष्ठीनः
गोष्ठो भूतपूर्वः—'खञ्' हुआ।

**भूतपूर्व**—भूतपूर्व अर्थ में वर्त्तमान शब्द से प्रत्यय होता है—

(2) गोष्ठो वर्त्तते
यहाँ प्रत्यय नहीं हुआ।

### (2040) अश्वस्यैकाहगमः *19* (1820)

**निर्देशादेव समर्थविभक्तिः। अश्वशब्दात् षष्ठीसमर्थादेकाहगम इत्येतदर्थे खञ् प्रत्ययो भवति। एकाहेन गम्यत इत्येकाहगमः। अश्वस्यैकाहगमोऽध्वा आश्वीनः। आश्वीनानि शतं पतित्वा (तां०ब्रा० 21.1.9)।**

**अर्थ**—निर्देश से समर्थ विभक्ति है। 'एकाहगम' अर्थ में षष्ठी समर्थ अश्व प्रातिपदिक से 'खञ्' होता है। एकाहेन गम्यते—ऐकाहगमः।

उदा० (1) आश्वीनः
अश्वस्यैकाहगमोऽध्वा—खञ् हुआ।

### (2041) शालीनकौपीने अधृष्टाकार्ययोः *20* (1821)

**शालीनकौपीनशब्दौ निपात्येते यथासंख्यमधृष्टे अकार्ये चाऽभिधेये। अधृष्टोऽप्रगल्भः। अकार्यमकरणार्हं विरुद्धम्। शालीनकौपीने अधृष्टाकार्ययोः पर्यायौ यथाकथञ्चिद् व्युत्पादयितव्यौ। शालाप्रवेशनमर्हति, कूपावतारमर्हति (म०भा०) इत्यर्थयोः खञ् प्रत्यय उत्तरपदलोपश्च निपात्यते-शालीनो जडः, कौपीनं पापम्।**

**अर्थ**—अधृष्ट तथा अकार्य अर्थों में यथासंख्य करके शालीन तथा कौपीन प्रातिपदिकों का निपातन किया जाता है।

अधृष्ट = अप्रगल्भ। अकार्य = अकारणीय कार्य।

उदा० (1) शालीनः
शालाप्रवेशनमर्हति—खञ्, उत्तरपदलोप का निपातन,
शाल् ईन सु—विभक्तिकार्य।

(2) कौपीनम्
कूपावतारम् अर्हति—खञ्, उत्तरपदलोप का निपातन,
कौप ईन सु—विभक्तिकार्य।

## (2042) व्रातेन जीवति *21* (1822)

**निर्देशादेव तृतीया समर्थविभक्तिः। व्रातशब्दात्तृतीयासमर्थाज्जीवतीत्यस्मिन्नर्थे खञ् प्रत्ययो भवति। नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाः व्राताः (म० भा०)। उत्सेधः शरीरम्, तदायास्य ये जीवन्ति ते उत्सेधजीविनः, तेषां कर्म व्रातम्, तेन व्रातेन जीवति व्रातीनः, तेषामेव व्रातानामन्यतम उच्यते। यस्त्वन्यस्तदीयेन जीवति तत्र नेष्यते।**

**अर्थ**—निर्देश से तृतीया समर्थविभक्ति है। तृतीयासमर्थ 'व्रात' प्रातिपदिक से 'खञ्' होता है, 'जीता है' इस अर्थ में। एक स्थान से दूसरे स्थान पर घूम-घूम कर विभिन्न वृत्तियों वाले मनुष्यों के समुदाय को 'व्रात' कहा जाता है।

**उदा०** (1) व्रातीनः
व्रातेन जीवति।

## (2043) साप्तपदीनं सख्यम् *22* (1823)

**साप्तपदीनमिति निपात्यते सख्येऽभिधेये। सप्तभिः पदैरवाप्यते साप्तपदीनम्। 'सख्यं जनाः सप्तपदीनमाहुः'। कथं साप्तपदीनः सखा, साप्तपदीनं मित्रमिति ? यदा गुणप्रधानः साप्तपदीनशब्दः सखिभावे तत्कर्मणि च वर्त्तते तदा सख्यशब्देन सामानाधिकरण्यं भवति, यदा तु लक्षणया वर्त्तते तदा पुरुषेण सामानाधिकरण्यं भवति।**

**अर्थ**—'सख्य' अर्थ अभिधेय हो तो 'साप्तपदीन' का निपातन किया जाता है।

**उदा०** (1) साप्तपदीनम्
सप्तभिः पदैरवाप्यते—खञ्।

(2) साप्तपदीनः सखा
जब गुणप्रधान साप्तपदीन शब्द सखिभाव में तथा तत्कर्म में वर्त्तमान होता है, तो सख्य शब्द के द्वारा समानाधिकरण होता है। तब लक्षणा के द्वारा वर्त्तमान होता है, तब पुरुष के साथ सामानाधिकरण्य होता है।

## (2044) हैयङ्गवीनं संज्ञायाम् *23* (1824)

**हैयङ्गवीनं निपात्यते संज्ञायां विषये। ह्योगोदोहस्य हियङ्गवादेशः, तस्य विकारे (म० भा०) खञ् प्रत्ययो भवति संज्ञायाम्। ह्योगोदोहस्य विकारः हैयङ्गवीनम्। घृतस्य संज्ञा। तेनेह न भवति-ह्योगोदोहस्य विकार उदश्वित् (म० भा०)।**



**अर्थ**—संज्ञा गम्यमान हो तो 'हैयङ्गवीन' शब्द निपातनसिद्ध है, विकार अर्थ में।

**उदा०** (1) हैयङ्गवीनम् (= घी)
ह्योगोदोह खञ्—ऐच् आगम,
हैयङ्गवीन सु—विभक्तिकार्य।
संज्ञा न होने से निम्नलिखित में नहीं होता है—
ह्योगोदोहस्य विकार उदश्वित्।

## (2045) तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ *24* (1825)

**तस्येति षष्ठीसमर्थेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासंख्यं पाकमूलयोरर्थयोः कुणब्, जाहच् इत्येतौ प्रत्ययौ भवतः। पीलूनां पाकः पीलुकुणः। कर्कन्धुकुणः। कर्णादिभ्यः-कर्णस्य मूलं कर्णजाहम्। पीलु। कर्कन्धु। शमी। करीर। कुवल। बदर। अश्वत्थ। खदिर। पील्वादिः। कर्ण। अक्षि। नख। मुख। केश। पाद। गुल्फ। भ्रू। शृङ्ग। दन्त। ओष्ठ। पृष्ठ। अङ्गुष्ठ-कर्णादिः।**

**अर्थ**—पाक तथा मूल अर्थ गम्यमान हों तो यथासंख्य करके षष्ठी समर्थ पील्वादि तथा कर्णादि प्रातिपदिकों से 'कुणप्' तथा 'जाहच्' प्रत्यय होते हैं। प्रकृति तथा प्रत्ययों में भी यथासंख्य नियम लागू होता है।

**उदा०** (1) पीलुकुणः
पीलूनां पाकः—कुणप्, सु।

(2) कर्णजाहम्
कर्णस्य मूलम्—जाहच्, सु।
शेष उदाहरण मूल में देखें।

## (2046) पक्षात्तिः *25* (1826)

**तस्येत्येव। तस्येति षष्ठीसमर्थात्पक्षशब्दात् मूलेऽभिधेये तिः प्रत्ययो भवति। मूलग्रहणमनुवर्त्तते, न पाकग्रहणम् (म० भा०), 'एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्त्तते' (व्या० प० 23) इति। पक्षस्य मूलं पक्षतिः प्रतिपत्।**

**अर्थ**—षष्ठी समर्थ 'पक्ष' प्रातिपदिक से 'ति' होता है, मूल अर्थ में। एक योग के निर्दिष्टों का भी एकदेश का अनुवर्त्तन होता है।

**उदा०** (1) पक्षतिः
पक्षस्य मूलम्—पक्ष ति सु।

(2047) तेन वित्तश्चुञ्चुप्चणपौ *26* (1827)

तेनेति तृतीयासमर्थाद्वित्त इत्येतस्मिन्नर्थे चुञ्चुप् चणप्–इत्येतौ प्रत्ययौ भवतः। वित्तः प्रतीतः, ज्ञात इत्यर्थः। विद्यया वित्तः विद्याचुञ्चुः। केशचणः।

अर्थ—तृतीया समर्थ प्रातिपदिक से चुञ्चुप् तथा चणप् प्रत्यय होते हैं, 'ज्ञात' अर्थ में।

उदा० (1) विद्याचुञ्चुः
विद्यया वित्तः।

(2) केशचणः (पूर्ववत्)।

(2048) विनञ्भ्यां नानाञौ नसह *27* (1828)

वि, नञ्–इत्येताभ्यां यथासंख्यं ना, नाञ्–इत्येतौ प्रत्ययौ भवतः। नसहेति प्रकृतिविशेषणम् (म० भा०)। असहार्थे पृथग्भावे वर्त्तमानाभ्यां विनञ्भ्यां स्वार्थे नानाञौ प्रत्ययौ भवतः। विना। नाना।

अर्थ—पृथग्भाव अर्थ में 'वि' तथा 'नञ्' प्रातिपदिकों से यथासंख्य करके 'ना' तथा 'नाञ्' होते हैं। न सह—प्रकृतिविशेषण है।

उदा० (1) विना
वि ना सु।

(2) नाना
नञ् नाञ् सु।

(2049) वेः शालच्छङ्कटचौ *28* (1829)

विशब्दात् शालच्, शङ्कटच्–इत्येतौ प्रत्ययौ भवतः। ससाधनक्रियावचनादुपसर्गात्स्वार्थे प्रत्ययौ भवतः। विगते शृङ्गे विशाले, विशङ्कटे। तद्योगाद्गौरपि विशालः, विशङ्कट इत्युच्यते। परमार्थतस्तु गुणशब्दा एते यथाकथञ्चिद् व्युत्पाद्यन्ते, नात्र प्रकृतिप्रत्ययार्थयोरभिनिवेशः।

अर्थ—'वि' शब्द से शालच् तथा शङ्कटच् प्रत्यय होते हैं। साधन क्रियावाची उपसर्ग से स्वार्थ में ये प्रत्यय होते हैं।

उदा० (1) विशाले
विगते शृङ्गे—वि शालच् औ—विभक्तिकार्य।

(2) विशङ्कटे
वि शङ्कटच् औ—पूर्ववत्।

इसके योग से 'गो' भी विशाल व विशङ्कट कही जाती है। वास्तव में ये गुणशब्द हैं। जैसे-तैसे व्युत्पन्न किए जाते हैं। यहाँ प्रकृति और प्रत्ययार्थ का अभिनिवेश नहीं है।

(2050) संप्रोदश्च कटच् *29* (1830)

सम्, प्र, उत्–इत्येतेभ्यः कटच् प्रत्ययो भवति चकाराद्वेश्च। सङ्कटम्। प्रकटम्। उत्कटम्। विकटम्। *कटच्प्रकरणेऽलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्* (म० भा०)। अलाबूनां रजोऽलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम्। *गोष्ठादयः स्थानादिषु पशुनामादिभ्य उपसंख्यानम्*। गवां स्थानं गोगोष्ठम्। महिषीगोष्ठम्। *सङ्घाते कटच् वक्तव्यः*। अवीनां सङ्घातः अविकटम्। *विस्तारे पटच् वक्तव्य*। अविपटम्। *द्वित्वे गोयुगच्*। उष्ट्रगोयुगम्। अश्वगोयुगम्। *प्रकृत्यर्थस्य षट्त्वे षड्गवच्*। हस्तिषड्गवम्। अश्वषड्गवम्। *विकारे स्नेहे तैलच्*। एरण्डतैलम्। इङ्गुदीतैलम्। तिलतैलम्। *भवने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौ*। इक्षुशाकटम्। मूलशाकटम्। इक्षुशाकिनम्। मूलशाकिनम्।

अर्थ—सम्, प्र तथा उद्—इनसे कटच् प्रत्यय होता है तथा 'वि' से भी कटच् प्रत्यय होता है।

उदा० (1) सङ्कटम्
सम् कटच्—संकट—अनुस्वार, परसवर्ण, सु।

(2) प्रकटम् (पूर्ववत्)।

(3) उत्कटम् (पूर्ववत्)।

(4) विकटम् (पूर्ववत्)।

कटच्—अलाबू, तिल, उमा और भंगा शब्दों से 'कटच्' होता है, 'धूलि' अर्थ गम्यमान होने पर कटच् होता है—

(5) अलाबूकटम्
अलाबूनां रजः—कटच् हुआ।

(6) तिलकटम्
तिलां रजः—'अनुदात्तादेश्च' से 'अञ्' प्राप्त था।

(7) उमाकटम्
पूर्ववत् 'अञ्' प्राप्त था।

(8) भङ्गाकटम्
'तृणधान्यानां०' (फिट् सूत्र) से 'अण्' प्राप्त था।

**गोष्ठजा०**—स्थान आदि अर्थों में पशुवाची शब्दों से 'गोष्ठच्' होता है—

(9) गोगोष्ठम्
गवां स्थानम्—'गोष्ठच्' हुआ।

(10) महिषीगोष्ठम् (पूर्ववत्)।

**सङ्घाते०**—समूह अर्थ में 'कटच्' होता है—

(11) अविकटम्
अवीनां सङ्घातः—कटच्, सु।

**विस्तारे०**—विस्तार अर्थ में 'पटच्' होता है—

(12) अविपटम्
अवीनां विस्तारः—पूर्ववत्।

**द्वित्वे०**—द्वित्व की प्रतीति में 'गोयुगच्' होता है—

(13) उष्ट्रगोयुगम्
द्वौ उष्ट्रौ—गोयुगच् हुआ।

(14) अश्वगोयुगम् (पूर्ववत्)।

**प्रकृत्य०**—प्रकृत्यर्थ का षट्त्व वाच्य हो तो 'षड्गवच्' होता है—

(15) हस्तिषड्गवम्
षड् हस्तिनः—प्रत्यय हुआ, सु।

(16) अश्वषड्गवम् (पूर्ववत्)।

**विकारे०**—विकार यदि 'स्नेह' हो तो 'तैलच्' प्रत्यय होता है—

(17) एरण्डतैलम्
एरण्डस्य विकारः—तैलच, सु।

(18) इङ्गुदीतैलम् (पूर्ववत्)।
(19) तिलतैलम् (पूर्ववत्)।

**भवने०**—उत्पत्तिस्थान यदि 'खेत' हो तो 'इक्षु' आदि से 'शाकट' और 'शाकिन' प्रत्यय होते हैं—

(20) इक्षुशाकटम्
इक्षूणां भवनं क्षेत्रम्—शाकट, सु।

(21) मूलकशाकटम् (पूर्ववत्)।
(22) इक्षुशाकिनम्
शाकिन, सु।

(23) मूलकशाकिनम् (पूर्ववत्)।

### (2051) अवात् कुटारच्च *30* (1831)

**अवशब्दात् कुटारच् प्रत्ययो भवति चकारात् कटच् च। अवकुटारम्। अवकटम्।**

**अर्थ**—'अव' से 'कुटारच्' तथा 'कटच्' होते हैं—

**उदा०** (1) अवकुटारम्
अव कुटारच् सु।

(2) अवकटम्
अव कटच् सु।

### (2052) नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः *31* (1832)

**अवादित्येव। नमनं नतम्। नासिकायाः सम्बन्धिनि नतेऽभिधेये टीटच्, नाटच्, भ्रटच्-इत्येते प्रत्यया भवन्ति संज्ञायां विषये। नासिकाया नतम् अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिकाऽपि, पुरुषोऽपि तथोच्यते। अवटीटः। अवनाटः। अवभ्रट इति।**

**अर्थ**—नत = नमन। 'नासिका का झुकाव' अभिधेय हो तो 'अव' प्रातिपदिक से टीटच्, नाटच् तथा भ्रटच् प्रत्यय होते हैं, संज्ञा गम्यमान हो।

**उदा०** (1) अवटीटम्
नासिकाया नतम्—टीटच्, सु।

(2) अवनाटम् (पूर्ववत्)।
(3) अवभ्रटम् (पूर्ववत्)।

उसके योग से नासिका भी तथा पुरुष भी कहे जाते हैं। यथा—

(4) अवटीटा
अव टीटच् टाप् सु।

(5) अवनाटः (पूर्ववत्)।
(6) अवभ्रटः (पूर्ववत्)।

### (2053) नेर्बिडज्बिरीसचौ *32* (1833)

**नते नासिकाया इत्यनुवर्त्तते, संज्ञायामिति च। निशब्दान्नासिकाया नतेऽभिधेये बिडच् बिरीसच् इत्येतौ प्रत्ययौ भवतः। निबिडम्। निबिरीसम्। तद्योगान्नासिकापि, पुरुषोऽपि-निबिडः निबिरीसः। कथं निबिडाः केशाः, निबिडं वस्त्रम्? उपमानाद्भविष्यति।**

**अर्थ**—नते, नासिकायाः सञ्ज्ञायाम्—इनका अनुवर्तन है। 'नासिका का झुकाव' अर्थ वाच्य हो तो 'नि' उपसर्ग से बिडच् और बिरीसच् होते हैं, संज्ञा गम्यमान हो तो।

**उदा०** (1) निबिडम्
नि बिडच् सु।

(2) निबिरीसम्
बिरीसच् हुआ।

उसके योग से नासिका भी तथा पुरुष भी कहे जाते हैं—

(3) निबिडः (पूर्ववत्)।
(4) निबिरीसः (पूर्ववत्)।

निबिडाः केशाः, निबिडं वस्त्रम्
ये दो प्रयोग उपमान से होते हैं।

## (2054) इनच्पिटच्चिकचि च *33* (1834)

**नेरिति वर्त्तते, नते नासिकाया इति च। निशब्दान्नासिकाया नतेऽभिधेये इनच्, पिटच्–इत्येतौ प्रत्ययौ भवतस्तत्सन्नियोगेन च निशब्दस्य यथासंख्यं चिक चि–इत्येतावादेशौ भवतः। चिकिनः। चिपिटः। *ककारः प्रत्ययो वक्तव्यश्चिक्च प्रकृत्यादेशः*। चिक्कः। तथा चोक्तम्–इनच्पिटच्काश्चिक-चिचिकादेशाश्च वक्तव्या इति (म० भा०)। *क्लिन्नस्य चिल् पिल्लश्चास्य चक्षुषी*। क्लिन्नस्य चिल् पिल्–इत्येतावादेशौ भवतो लश्च प्रत्ययोऽस्य चक्षुषी इत्येतस्मिन्नर्थे। क्लिन्ने अस्य चक्षुषी चिल्लः। पिल्लः। *चुल्लादेशो वक्तव्यः*। चुल्लः। अस्येत्यनेन नार्थः। चक्षुषोरेवाभिधाने प्रत्यय इष्यते। क्लिन्ने चक्षुषी चिल्ले। पिल्ले। चुल्ले। तद्योगात्तु पुरुषस्तथोच्यते।**

**अर्थ**—नेः, नते, नासिकायाः—इनका अनुवर्तन है। 'नासिका का झुकाव' अर्थ वाच्य हो तो 'नि' उपसर्ग से इनच् व पिटच् होते हैं तथा 'नि' शब्द को प्रत्यय के क्रम से 'चिक' तथा 'चि' आदेश होते हैं, संज्ञा गम्यमान हो तो।

**उदा०** (1) चिकिनः
नि इनच् → चिक इनच्—हलन्त्यम्, सु।

(2) चिपिटः
नि पिटच् → चि पिटच्—हलन्त्यम्, सु।

**ककारः**—नि 'उपसर्ग' से 'क' प्रत्यय तथा प्रकृति को 'चिक्' होता है—

(3) चिक्कः
नि क → चिक् क सु।

**इनच्०**—इनच्, पिटच् तथा क प्रत्यय होते हैं और प्रत्ययों के यथासंख्य करके प्रकृति को चिक, चि तथा चिक् आदेश होते हैं।

**क्लिन्नस्य०**—'उसकी आँखें गीली हैं' इस अर्थ में 'क्लिन्न' शब्द से 'ल' होता है तथा प्रकृति को 'चिल्' तथा 'पिल्' आदेश होते हैं—

(4) चिल्लः
क्लिन्ने अस्य चक्षुषी—चिल् ल सु।

(5) पिल्लः
पक्ष में 'पिल्' आदेश।

**चुलादे०**—'चुल्' आदेश होता है—

(6) चुल्लः
चुल् ल सु—पूर्ववत्।
उसके योग से पुरुष भी कहा जाता है।

## (2055) उपाधिभ्यां त्यकन्नासन्नारूढयोः *34* (1835)

**उप अधि–इत्येताभ्यां यथासंख्यमासन्नारूढयोर्वर्त्तमानाभ्यां स्वार्थे त्यकन् प्रत्ययो भवति। संज्ञाधिकाराच्च नियतविषय-मासन्नारूढं गम्यते। पर्वतस्यासन्नमुपत्यका। तस्यैवारूढम-धित्यका। प्रत्ययस्थात्कात्पूर्वस्य (7.3.44) इतीत्वमत्र न भवति, संज्ञाधिकारादेव।**

**अर्थ**—आसन्न और आरूढ अर्थों में यथासंख्य करके उप तथा अधि उपसर्गों से 'त्यकन्' प्रत्यय होता है, संज्ञा के विषय में। संज्ञा के अधिकार से नियत विषय का ज्ञान होता है।

**उदा०** (1) उपत्यका
पर्वतस्याऽऽसन्नम्—उप त्यकन् टाप् सु।

(2) अधित्यका
पर्वतस्यैवाऽऽरूढम्—अधि त्यकन् टाप् सु।

संज्ञा के अधिकार से प्रत्ययस्थात्कात्पूर्वस्य० से इत्व नहीं होता है।

## (2056) कर्मणि घटोऽठच् *35* (1836)

**निर्देशादेव समर्थविभक्तिः। कर्मन् शब्दात् सप्तमीसमर्थाद् घट इत्येतस्मिन्नर्थेऽठच् प्रत्ययो भवति। घटत इति घटः। कर्मणि घटते कर्मठः पुरुषः।**

**अर्थ**—निर्देश से समर्थ विभक्ति होती है। 'चेष्टा करने वाला'—इस अर्थ में सप्तमी समर्थ कर्मन् प्रातिपदिक से 'अठच्' होता है।

उदा० (1) कर्मठः
कर्मणि घटते → कर्मन् अठच्—
कर्म् अठ सु—विभक्तिकार्य।

### (2057) तदस्य सञ्जातं तारकादिभ्य इतच् *36* (1837)

**तदिति प्रथमासमर्थेभ्यस्तारकादिभ्यः शब्देभ्योऽस्येति षष्ठ्यर्थे इतच् प्रत्ययो भवति। सञ्जातग्रहणं प्रकृतिविशेषणम्। तारकाः सञ्जाता अस्य नभसस्तारकितं नभः। पुष्पितो वृक्षः। तारका। पुष्प। मुकुल। कण्टक। पिपासा। सुख। दुःख। ऋजीष। कुड्मल। रोग। विचार। व्याधि। निष्क्रमण। मूत्र। पुरीष। किसलय। कुसुम। प्रचार। तन्द्रा। वेग। बुभुक्षा। श्रद्धा। उत्कण्ठा। भर। द्रोह। *गर्भादप्राणिनि* (ग०सू० 120)। तारकादि-राकृतिगणः।**

**अर्थ**—सञ्जात समानाधिकरण वाले प्रथमा समर्थ 'तारक' आदि प्रातिपदिकों से 'इतच्' होता है, षष्ठी के अर्थ में। सञ्जात ग्रहण प्रकृति का विशेषण है।

उदा० (1) तारकितम्
तारकाः सञ्जाता अस्य नभसः—
तारक इतच् सु—विभक्तिकार्य।

तारकादि गण आकृतिगण है। शेष उदाहरण मूल में देखें।

### (2058) प्रमाणे द्वयसज्दघ्नञ्मात्रचः *37* (1838)

**तदस्येत्यनुवर्त्तते। तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे द्वयसच् दघ्नच् मात्रच्–इत्येते प्रत्यया भवन्ति यत्तत्प्रथमासमर्थं प्रमाणं चेत्तद्भवति। ऊरुः प्रमाणमस्य ऊरुद्वयसम्। ऊरुदघ्नम्। ऊरुमात्रम्। जानुद्वयसम्। जानुदघ्नम्। जानुमात्रम्।**

**'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम'। (म०भा०)**

**ऊरुद्वयसमुदकम्। ऊरुदघ्नमुदकम्। मात्रच् पुनरविशेषेण–प्रस्थमात्रमित्यपि भवति। *प्रमाणे लो वक्तव्यः* (म०भा०)। प्रमाणशब्दा इति ये प्रसिद्धास्तेभ्य उत्पन्नस्य प्रत्ययस्य लुग्भवति। शमः प्रमाणमस्य शमः। दिष्टिः। वितस्तिः। *द्विगोर्नित्यम्* (म०भा०)। द्वौ शमौ प्रमाणमस्य द्विशमः। त्रिसमः। द्विवितस्तिः। नित्यग्रहणं किम्? संशये श्राविणं वक्ष्यति। तत्रापि द्विगोर्लुगेव यथा स्यात्। द्वे दिष्टी स्यातां वा न वा द्विदिष्टिः। *डट्स्तोमे वक्तव्यः* (म०भा०)। पञ्चदश स्तोमः। पञ्चदशी रात्रिः। टित्वान् ङीप्। *शन्शतोर्डिनिर्वक्तव्यः* (म०भा०)। पञ्चदशिनोऽर्द्धमासाः। त्रिंशिनो मासाः (तै०सं० 7.5.20.1)। *विंशतेश्चेति वक्तव्यम्* (म०भा०)। विंशिनोऽङ्गिरसः (गो०ब्रा० 1.1.8.1)। *प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः* (म०भा०)। शममात्रम्। दिष्टिमात्रम्। प्रस्थमात्रम्। कुडवमात्रम्। पञ्चमात्रम्। दशमात्रा गावः। *वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम्* (म०भा०)। तावदेव तावद्द्वयसम्। तावन्मात्रम्। एतावद्द्वयसम्। एतावन्मात्रम्। यावद्द्वयसम्। यावन्मात्रम्।**

**अर्थ**—'तदस्य' का अनुवर्त्तन है। प्रथमासमर्थ प्रमाण समानाधिकरणवाची प्रातिपदिक से षष्ठी के अर्थ में द्वयसच्, दघ्नच् तथा मात्रच् प्रत्यय होते हैं।

उदा० (1) ऊरुद्वयसम्
ऊरु प्रमाणम् अस्य—'द्वयसच्' हुआ,
ऊरु द्वयस सु—यह प्रत्यय ऊँचाई के नाप में होता है।

(2) ऊरुदघ्नम्
पूर्ववत्, दघ्नच् हुआ, यह प्रत्यय ऊँचाई के नाप में होता है।

(3) ऊरुमात्रम्
'मात्रच्' हुआ। यह ऊँचाई व लम्बाई दोनों नापों में होता है।

(4) जानुद्वयसम् (पूर्ववत्)।
(5) जानुदघ्नम् (पूर्ववत्)।
(6) जानुमात्रम् (पूर्ववत्)।

प्रस्थमात्रम् भी होता है।

**प्रमाणे०**—जो प्रमाण शब्द प्रसिद्ध है, उनसे उत्पन्न प्रत्यय का लुक् होता है—

(7) शमः
शमः प्रमाणम् अस्य—प्रत्यय का लुक् हुआ।

(8) दिष्टिः (पूर्ववत्)।
(9) वितस्तिः (पूर्ववत्)।

**द्विगोर्नित्यम्**—द्विगुसंज्ञक प्रातिपदिक से विहित प्रत्यय का नित्य लुक् होता है—

(10) द्विशमः
द्वौ शमौ प्रमाणम् अस्य—प्रत्यय का लुक् हुआ।

(11) त्रिशमः (पूर्ववत्)।
(12) द्विबितस्तिः (पूर्ववत्)।

नित्य० अर्थात् प्रत्यय का लुक् नित्य होता है। संशय में श्रावी कहा जायेगा। वहाँ भी द्विगु से लुक् ही हो जाय। यथा—

(13) द्विदिष्टिः
द्वे दिष्टी स्यातां वा न वा—लुक् हुआ।

डट् स्तोमे —स्तोम अर्थ में 'डट्' होता है—

(14) पञ्चदशस्तोमः
पञ्चदशन् डट्—टि का लोप, सु।

(15) पञ्चदशी
पञ्चदश ङीप्।

शन् शतो०—शन् और शत् अन्त वाले शब्दों से 'डिनि' होता है—

(16) पञ्चदशिनः
पञ्चदशन् डिनि—टिलोप, जस्।

(17) त्रिंशिनः (पूर्ववत्)।

विंशते०—विंशति शब्द से 'डिनि' होता है—

(18) विंशिनः
विंशति डिनि—पूर्ववत्।

प्रमाणपरि०—प्रमाण व परिमाण से संख्या का संशय होने पर 'मात्रच्' होता है—

(19) शममात्रम्
'मात्रच्' हुआ।

(20) दिष्टिमात्रम्
'मात्रच्' हुआ।

(21) प्रस्थमात्रम् (पूर्ववत्)।
(22) कुडवमात्रम् (पूर्ववत्)।
(23) पञ्चमात्रम् (पूर्ववत्)।
(24) दशमात्रम् (पूर्ववत्)।

वत्वन्ता०—वतु अन्त वाले प्रातिपदिक से स्वार्थ में द्वयसच् व मात्रच् प्रत्यय बहुलता से होते हैं—

(25) तावद्द्वयसम् (पूर्ववत्)।
(26) तावन्मात्रम् (पूर्ववत्)।
(27) एतावद्द्वयसम् (पूर्ववत्)।
(28) एतावन्मात्रम् (पूर्ववत्)।
(29) यावद्द्वयसम् (पूर्ववत्)।
(30) यावन्मात्रम् (पूर्ववत्)।

## (2059) पुरुषहस्तिभ्यामण् च *38* (1839)

तदस्येति वर्त्तते, प्रमाण इति च। पुरुषहस्तिभ्यां प्रथमासमर्थाभ्यां प्रमाणोपाधिकाभ्यामस्येति षष्ठ्यर्थेऽण् प्रत्ययो भवति, चकाराद् द्वयसजादयश्च। पुरुषः प्रमाणमस्य पौरुषम्। पुरुषद्वयसम्। पुरुषदघ्नम्। पुरुषमात्रम्। हास्तिनम्। हस्तिद्वयसम्। हस्तिदघ्नम्। हस्तिमात्रम्। द्विगोर्नित्यं लुक्-द्विपुरुषमुदकम्। त्रिपुरुषमुदकम्। द्विहस्ति। त्रिहस्ति। द्विपुरुषी। त्रिपुरुषी। द्विहस्तिनी। त्रिहस्तिनी।

अर्थ—'तदस्य' की अनुवृत्ति है। प्रथमा समर्थ प्रमाण समानाधिकरण वाले पुरुष व हस्तिन् प्रातिपदिकों से षष्ठी के अर्थ में अण्, द्वयसच्, दघ्नच् तथा मात्रच् प्रत्यय होते हैं।

उदा० (1) पौरुषम्
पुरुषः प्रमाणम् अस्य—अण्, आदिवृद्धि।

(2) पुरुषद्वयसम्
'द्वयसच्' हुआ।

(3) पुरुषदघ्नम्
पुरुष दघ्नच् सु।

(4) पुरुषमात्रम्
पुरुष मात्रच् सु।

(5) हास्तिनम्।
हस्तिन् अण्।

(6) हस्तिद्वयसम्
हस्तिन् द्वयसच् सु।

(7) हस्तिदघ्नम्
हस्तिन् दघ्नच् सु।

(8) हस्तिमात्रम्
हस्तिन् मात्रच् सु।

द्विगु से नित्य लुक् होता है।

(9) द्विपुरुषम् (उदकम्)
प्रत्यय का लुक् हुआ।

(10) त्रिपुरुषम् (उदकम्)
प्रत्यय का लुक् हुआ।

(11) द्विहस्ति
लुक् हुआ।

(12) त्रिहस्ति
लुक् हुआ।

(13) द्विपुरुषी
प्रत्यय का लुक् हुआ। स्त्रीत्व में ङीप् हुआ।

(14) त्रिपुरुषी
लुक्, ङीप्।

(15) द्विहस्तिनी
लुक्, ङीप्।

(16) त्रिहस्तिनी (पूर्ववत्)।

### (2060) यत्तदेतेभ्यः परिमाणे वतुप् *39* (1840)

**तदस्येत्येव। यत्तदेतेभ्यः प्रथमासमर्थेभ्यः परिमाणोपाधिकेभ्योऽस्येति षष्ठ्यर्थे वतुप् प्रत्ययो भवति। यत्परिमाणमस्य यावान्। तावान्। एतावान्। प्रमाणग्रहणेऽनुवर्त्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात्।**

**डावतावथवैशेष्यान्निर्देशः पृथगुच्यते।**
**मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः॥**
**(म० भा०)**

***वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्* (म० भा०)। न त्वा वाँ अन्यो दिव्यो व पार्थिवो न जातो न जनिष्यते (ऋ० 7.32.23)। त्वावतः पुरुवसो (ऋ० 8.46.1)। यज्ञं विप्रस्य मावतः (ऋ० 1. 142.2)। त्वत्सदृशस्य मत्सदृशस्येत्यर्थः।**

**अर्थ**—प्रथमा समर्थ परिमाण समानाधिकरणवाची यद्, तद् और एतद् प्रातिपदिकों से षष्ठी के अर्थ में 'वतुप्' होता है। उकार व पकार की इत्संज्ञा होती है।

**उदा०** (1) यावान्
यत् परिमाणम् अस्य → यद् वतुप् → य आ वत्—आ सर्वनाम्नः, अकः सवर्णे०,
या वत् सु—विभक्तिकार्य।

(2) तावान्
तद् वतुप् सु—पूर्ववत्।

(3) एतावान् (पूर्ववत्)।

**प्रमाणग्रहण** का अनुवर्त्तन होने पर प्रमाण और परिमाण का भेद होने से परिमाण का ग्रहण भी होता है।

**डावता०**—पूर्व आचार्यों ने 'डावतु' का विधान किया है। तदपेक्ष अर्थभेद से यह निर्देश पृथक् कहा गया है। ताकि पृथक् निर्देश के द्वारा अर्थभेद के सिद्ध हो जाने पर मात्रच् आदि की बाधा न हो जाय। अर्थभेद होने पर वतुप् प्रत्ययान्त से मात्रच् आदि की उत्पत्ति सिद्ध है।

**वतु०**—वेद के विषय में सादृश्य अर्थ में युष्मद् व अस्मद् शब्दों से होता है—

(4) त्वावतः
युष्मद् वतुप्—प्रत्ययोत्तरपदयोश्च,
त्व आ वत् → त्वावत् ङस्—त्वावतः।

(5) मावतः
अस्मद् वतुप्—पूर्ववत्।

### (2061) किमिदम्भ्यां वो घः *40* (1841)

**किमिदम्भ्यामुत्तरस्य वतुपो वकारस्य घकारादेशो भवति। कियान्। इयान्। एतदेव चादेशविधानं ज्ञापकं-किमिदम्भ्यां वतुप् प्रत्ययो भवतीति। अथ वा योगविभागेन वतुपं विधाय पश्चाद्वो घो विधीयते (म० भा०)।**

**अर्थ**—किम् तथा इदम् शब्दों से उत्तर वतुप् के वकार के स्थान पर घकार आदेश होता है।

**उदा०** (1) कियान्
किम् परिमाणम् अस्य—किम् वतुप्—
किम् घत् → किम् इयत् → की इयत् → क् इयत् सु।

(2) इयान्
इदम् वतुप् → इदम् घत्—इदम ईश्।

**एतदेव**—यही आदेश-विधान ज्ञापक है कि किम् व इदम् से वतुप् होता है। अथवा योगविभाग करके वतुप् का विधान करने के पश्चात् वकार के स्थान पर 'घ' का विधान किया जाता है।

### (2062) किमः संख्यापरिमाणे डति च *41* (1842)

**संख्यायाः परिमाणं संख्यापरिच्छेद इत्यर्थः। संख्यापरिमाणे वर्त्तमानात् किमः प्रथमासमर्थादस्येति षष्ठ्यर्थे डतिः**

प्रत्ययो भवति, चकाराद्वतुप् च। तस्य च वकारस्य घादेशो भवति। पृच्छ्यमानत्वात्परिच्छेदोपाधिकायां संख्यायां वर्त्तमानात्किमः प्रत्ययो विज्ञायते। का संख्या परिमाणमेषां ब्राह्मणानां कति ब्राह्मणाः। कियन्तो ब्राह्मणाः। अथ वा संख्यैव परिमाणात्मिका परिच्छेदस्वभावा गृह्यते, का संख्या परिमाणं येषामिति। ननु च संख्या परिमाणात्मिकैव परिच्छेदस्वभावा, सा किमर्थं परिमाणेन विशेष्यते? यत्रापरिच्छेदकत्वेन विवक्ष्यते तत्र मा भूदिति। क्षेपे हि परिच्छेदो नास्ति–केयमेषां संख्या दशानामिति।

अर्थ—संख्या का परिमाण संख्यापरिच्छेद कहलाता है। संख्या के परिमाण अर्थ में वर्त्तमान प्रथमा समर्थ किम् प्रातिपदिक से षष्ठी के अर्थ में 'डति' तथा 'वतुप्' होता है।

उदा० (1) कति
का संख्या परिमाणम् एषां ब्राह्मणानाम्—
किम् डति → क् अति—टिलोप,
कति जस्—लुक्।

(2) कियन्तः
किम् वतुप्—पूर्ववत्।
कियत् जस्—विभक्तिकार्य।

अथवा परिमाणात्मिका संख्या ही परिच्छेद स्वभाव से युक्त गृहीत होती है—का संख्या परिमाणं येषाम्। संख्या ही आत्मिका ही परिच्छेद स्वभाव वाली होती है। वह परिमाण के द्वारा किस प्रकार विशेषित होती है? जहाँ अपरिच्छेदक होने से कही जाती है, वहाँ न हो। क्षेप अर्थ में परिच्छेद नहीं होता—केयमेषां संख्या दशानाम्।

### (2063) संख्याया अवयवे तयप् *42* (1843)

तदस्येत्येव। संख्याया अवयवे वर्त्तमानाया अस्येति षष्ठ्यर्थे तयप् प्रत्ययो भवति। अवयवा अवयविनः सम्बन्धिन इति सामर्थ्यादवयवो प्रत्ययार्थो विज्ञायते। पञ्च अवयवा अस्य पञ्चतयम्। दशतयम्। चतुष्टयम्। चतुष्टयी।

अर्थ—संख्या के अवयव अर्थ में वर्त्तमान इससे षष्ठी के अर्थ में 'तयप्' प्रत्यय होता है।

उदा० (1) पञ्चतयम्
पञ्च अवयवा अस्य → पञ्चन् तयप्—
पञ्च तय—नलोपः प्रातिपदिका०, हलन्त्यम्,
पञ्चतय सु—स्वादिष्वसर्व०।

(2) दशतयम् (पूर्ववत्)।

(3) चतुष्टयी
चतुर् तयप् → चतुः तय—
चतुस् तय—विसर्जनीयस्य सः,
चतुष् तय—ह्रस्वात्तादौ०,
चतुष्टय—ष्टुना ष्टुः,
चतुष्टय ङीप् सु—स्त्रीत्व में।

तयप् तथा अयच् प्रत्ययान्त शब्दों का दो प्रकार से प्रयोग होता है। यथा—

(क) धर्मप्रधान निर्देश की दशा में स्त्रीलिंग या नपुंसकलिंग। जैसे—वर्णानां चतुष्टयम् अथवा वर्णानां चतुष्टयी। इसी प्रकार—लोकानां त्रयम्, त्रयी वा।

(ख) धर्मिप्रधान निर्देश की दशा में—विशेष्यानुसार। जैसे—त्रयाः लोकाः, त्रये लोकाः (प्रथमचरमतयाल्पा०)।

त्रय्यः स्थितयः।
त्रयाणि जगन्ति।

### (2064) द्वित्रिभ्यां तयस्यायज्वा *43* (1844)

पूर्वेण विहितस्य तयस्य द्वित्रिभ्यां परस्य वाऽयजादेशो भवति। द्वाववयवावस्य द्वयम्। द्वितयम्। त्रयम्। त्रितयम्। तयग्रहणं स्थानिनिर्देशार्थम्, अन्यथा प्रत्ययान्तरमयज्विज्ञायेत। तत्र को दोषः? त्रयी गतिरिति तयनिबन्धन ईकारो (4.1.15) न स्यात्, प्रथमचरमतयेत्येष (1.1.33) विधिश्च न स्यात्–द्वये, द्वयाः। चकारः स्वरार्थः।

अर्थ—पूर्व सूत्र के द्वारा 'द्वि' तथा 'त्रि' से पर विहित तयप् प्रत्यय के स्थान पर 'अयच्' विकल्प से होता है। यह अनेकाल् होने से सर्वादेश होता है।

उदा० (1) द्वयम्
द्वाववयवावस्य → द्वि तयप्—
द्वि अयच् → द्व् अय सु—यस्येति च।

(2) द्वितयम्
द्वि तयप् सु—पक्ष में।

(3) त्रयम्
पूर्ववत् अयच्।

(4) त्रितयम्
पूर्ववत् तयप्।

**तयग्रहणं**—'तय' ग्रहण से स्थानी का निर्देश किया गया है। अन्यथा अन्य प्रत्यय के रूप में 'अयच्' का ज्ञान होने लगता। इसमें क्या दोष है ?

(समा०) उस दशा में—

(5) त्रयी गतिः

यहाँ तयनिबन्धन ईकार नहीं हो पाता।

प्रथमचरमतया० से भी विधि प्रसक्त नहीं होती है।

(6) द्वये

(7) द्वयाः

'अयच्' में चकार स्वर के लिए है।

**विशेष**—प्रकृत सूत्र में 'तयप्' पद का अनुवर्त्तन कर विभक्ति-विपरिणामेन उसे षष्ठ्यन्त (तयपः) कर लेने पर लाघव होता है, परन्तु ऐसा करने में एक दोष उपस्थित होता है। प्रकृत सूत्र में 'तयस्य' पद का योग न करने पर 'अयच्' प्रत्यय तयप् का अपवाद बन जाता है। उस दशा में स्थानिवद्भाव न होने से स्त्रीत्व में ङीप् नहीं हो पाता तथा जस् में पाक्षिक सर्वनामता (प्रथमचरमतयाल्पार्ध०) भी नहीं हो पाती।

## (2065) उभादुदात्तो नित्यम् *44* (1845)

**उभशब्दात्परस्य तयपो नित्यमयजादेशो भवति, स चोदात्तः। वचनसामर्थ्यादादेरुदात्तत्वं विज्ञायते। उभशब्दो यदि लौकिकी संख्या, ततः पूर्वेणैव विहितस्य तयप आदेशविधानार्थं वचनम्। अथ न संख्या, ततो योगविभागेन तयपं विधाय तस्य नित्यमयजादेशो विधीयते। उभयो मणिः। उभयेऽस्य देवमनुष्याः (तै०सं० 1.6.8.1)।**

**अर्थ**—'उभ' प्रातिपदिक से पर विहित 'तयप्' के स्थान पर नित्य 'अयच्' आदेश होता है और वह उदात्त होता है। वचन-सामर्थ्य से वह आदि अकार उदात्त होता है।

अयच् में दो अच् हैं। दोनों के उदात्तत्व का बाध 'अनुदात्तं पदमेकवर्जम्' से हो जाता है। 'चित्' होने से अयच् का अन्तोदात्तत्व 'चितः' के द्वारा सिद्ध ही है। इससे सिद्ध होता है कि आचार्य आदि अच् (अकार) को उदात्त करना चाहते हैं।

**उभ**—यदि उभ शब्द लौकिकी संख्या हो तो उससे पर पूर्वसूत्र के द्वारा ही विहित 'तयप्' के स्थान पर आदेश का विधान किया गया है। यदि संख्या न हो तो योगविभाग के द्वारा 'तयप्' का विधान करके उसके स्थान पर नित्य 'अयच्' आदेश का विधान किया जाता है।

36 का०द्वि०

उदा० (1) उभयः

उभ तयप् → उभ अयच्—पूर्ववत्,

उभ् अय सु—विभक्तिकार्य।

(2) उभये

उभय जस् → विभक्तिकार्य।

## (2066) तदस्मिन्नधिकमिति दशान्ताड्डः *45* (1846)

**तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे दशान्तात् प्रातिपदिकाद् डः प्रत्ययो भवति यत्तत्प्रथमासमर्थमधिकं चेत्तद्भवति। इतिकरणस्ततश्चेद्विवक्षा। एकादश अधिका अस्मिन् शते एकादशं शतम्। एकादशं सहस्रम्। द्वादशं शतम्। द्वादशं सहस्रम्। दशान्तादिति किम्? पञ्चाधिका अस्मिन् शते। अन्तग्रहणं किम्? दशाधिका अस्मिन् शते। प्रत्यार्थेन च समानजातीये प्रकृत्यर्थे सति प्रत्यय इष्यते (म०भा०)–एकादश कार्षापण अधिक अस्मिन् कार्षापणशते एकादशं कार्षापणशतमिति। इह तु न भवति–एकादश माषा अधिका अस्मिन् कार्षापणशत इति (म० भा०)। शतसहस्रयोश्चेष्यते (म०भा० इष्टि)। इह न भवति–एकादशाधिका अस्यां त्रिंशतीति। इतिकरणो विवक्षार्थः इत्युक्तम्, तत इदं सर्वं लभ्यते। कथमेकादशं शतसहस्रमिति? शतानां सहस्रं सहस्राणां वा शतमिति शतसहस्रमित्युच्यते, तत्र शतसहस्रयोरित्येव सिद्धम्।**

**अधिके समानजाताविष्टं शतसहस्रयोः।**
**यस्य संख्या तदाधिक्ये डः कर्त्तव्यो मतो मम॥**
**(म०भा०)**

**अर्थ**—दशन् शब्द है अन्त में जिसके, ऐसे प्रथमा समर्थ प्रातिपदिक से 'ड' प्रत्यय होता है, सप्तमी के अर्थ में, यदि वह प्रथमा समर्थ प्रातिपदिक 'अधिक' समानाधिकरण वाला हो। इतिकरण विवक्षा है।

उदा० (1) एकादशम् (शतम्)

एकादश अधिका अस्मिन् शते—

एकादशन् ड—चुटू, 'टेः' से टि का लोप,

एकादश् अ सु—विभक्तिकार्य।

(2) एकादशम् (सहस्रम्) (पूर्ववत्)।

(3) द्वादशम् (शतम्)

पूर्ववत्।

दशान्ता०—दशन् शब्द है अन्त में जिसके, ऐसे प्रातिपदिक से 'ड' होता है—

पञ्चाऽधिका अस्मिन् शते—यहाँ 'ड' नहीं हुआ।

अन्तग्रह०—अन्तग्रहण का फल यह है कि निम्नलिखित में न हो—

दशाऽधिका अस्मिन् शते।

प्रत्ययार्थ के द्वारा समानजातीय प्रकृत्यर्थ होने पर प्रत्यय होता है। यथा—

एकादश कार्षापणा अधिका अस्मिन् कार्षापणशते—
एकादशं कार्षापणशतम्।

निम्नलिखित में नहीं होता है—
एकादशाऽधिका अस्यां त्रिंशति।
इतिकरण विवक्षा के लिए है। इससे यह सब प्राप्त होता है।

शतानाम् सहस्रम् अथवा सहस्राणाम् शतम्—इस प्रकार 'शतसहस्रम्' बनता है। इस शब्द से निम्नलिखित सिद्ध होता है—

एकादशं शतसहस्रम्।

अधिके०—लोक में प्रत्ययार्थ के द्वारा समान जाति में शत व सहस्र शब्दों से प्रत्ययाख्य कार्य इष्ट ही है। जिसका गणन हो, उसके आधिक्य में 'ड' करना चाहिए—ऐसा मेरा मत है। यथा—शतानां सहस्रम्—शतसहस्रम्। तब शताधिक्य में 'ड' करना चाहिए। यथा—सहस्राणां शतम्—सहस्रशतम्। तब सहस्राधिक्य में 'ड' करना चाहिए।

## (2067) शदन्तविंशतेश्च *46* (1847)

तदस्मिन्नधिकमित्यनुवर्त्तते, ड इति च। शदन्तात्प्रातिपदिकाद्विंशतेश्च डः प्रत्ययो भवति तदस्मिन्नधिकमित्येतस्मिन् विषये। त्रिंशदधिका अस्मिञ्छते त्रिंशं शतम्। शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात् स तदादेरधिकार्थम्—एकत्रिंशं शतम्। एकचत्वारिंशं शतम्। संख्याग्रहणं च कर्त्तव्यम्, इह मा भूत्—गोत्रिंशदधिका अस्मिन् गोशते इति। *विंशतेश्च* (म० भा०)—विंशं शतम्। *तदन्तादपीति वक्तव्यम्*। एकविंशं शतम्। संख्याग्रहणं च कर्तव्यम् (म० भा०)—इह मा भूत्—गोविंशतिरधिकाऽस्मिन् गोशते इति।

अर्थ—'तदस्मिन्नधिकम्' तथा 'ड' का अनुवर्त्तन है। 'अधिक' अर्थ में वर्त्तमान प्रथमा समर्थ शदन्त तथा विंशति प्रातिपदिकों से सप्तमी के अर्थ में 'ड' होता है।

उदा० (1) त्रिंशम् शतम्
त्रिंशदधिका अस्मिञ्छते—
त्रिंशत् ड → त्रिंश् अ सु—विभक्तिकार्य।

(2) एकत्रिंशं शतम् (पूर्ववत्)।
(3) एकचत्वारिंशं शतम् (पूर्ववत्)।

संख्याग्रहण करना चाहिए। निम्नलिखित में नहीं होता है—
गोत्रिंशदधिका अस्मिन् गोशते।

तदन्तादपी०—तदन्त से भी प्रत्यय होता है—

(4) एकविंशम् शतम् (पूर्ववत्)।

संख्या का ग्रहण करना चाहिए। निम्नलिखित में नहीं होता है—
गोविंशतिरधिकाऽस्मिन् गोशते।

## (2068) संख्याया गुणस्य निमाने मयट् *47* (1848)

तदस्येत्यनुवर्त्तते तदस्य सञ्जातम् (5.2.36) इत्यतः। तदिति प्रथमासमर्थात् संख्यावाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे मयट् प्रत्ययो भवति यत्तत्प्रथमासमर्थं गुणस्य निमाने चेत्तद् वर्त्तते। गुणः भागः, निमानं मूल्यम्। गुणो येन निमीयते मूल्यभूतेन सोऽपि सामर्थ्याद्भाग एव विज्ञायते। यवानां द्वौ भागौ। निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानाम्। त्रिमयम्। चतुर्मयम्। भागेऽपि तु विधीयमानः प्रत्ययः प्राधान्येन भागवन्तमाचष्टे, तेन सामानाधिकरण्यं भवति—द्विमयमुदश्विदिति। गुणस्येति चैकत्वं विवक्षितम्, तेनेह न भवति—द्वौ भागौ यवानाम्, त्रय उदश्वित (म० भा०) इति। *भूयसश्च वाचिकायाः संख्यायाः प्रत्यय इष्यते*। इह न भवति—एको भागो निमानमस्येति। भूयस इति च प्रत्ययार्थात्प्रकृत्यर्थस्याधिक्यमात्रं विवक्षितम्, बहुत्वमतन्त्रम्, तेन द्विशब्दादपि भवति। गुणशब्दः समानावयववचनः, तेनेह न भवति—द्वौ भागौ यवानामध्यर्द्ध उदश्वित (म० भा०) इति। *निमेये चापि दृश्यते* (म० भा०)। निमेये वर्त्तमानायाः संख्याया निमाने प्रत्ययो दृश्यते। उदश्वितो द्वौ भागौ निमेयमस्य यवभागस्य द्विमया यवा उदश्वितः। त्रिमया यवा उदश्वितः। चतुर्मयाः (म० भा०)। गुणस्येति किम्? द्वौ व्रीहियवौ निमानस्योदश्वितः। निमान इति किम्? द्वौ गुणौ क्षीरस्यैकस्तैलस्य द्विगुणं पयः तैलं पच्यते क्षीरेणेत्यत्र मा भूत्।

अर्थ—'इस भाग का यह मूल्य है'—इस अर्थ में प्रथमा समर्थ संख्यावाची प्रातिपदिक से 'मयट्' होता है। जिसके द्वारा गुण

**(3062) वाऽऽक्रोशदैन्ययोः *61* (3081)**

आक्रोशे गम्यमाने, दैन्ये च क्षियो निष्ठायामण्यदर्थे वा दीर्घो भवति। क्षितायुरेधि। क्षीणायुरेधि। दैन्ये-क्षितकः। क्षीणकः। क्षितोऽयं तपस्वी। क्षीणोऽयं तपस्वी।

अर्थ—आक्रोश और दैन्य अर्थों में तथा ण्यत् भिन्न अर्थ में वर्त्तमान निष्ठा के परे रहते 'क्षि' अंग को विकल्प से दीर्घ होता है।

उदा० (क) आक्रोशे—

(1) क्षीणायुः
क्षि क्त—पाक्षिक दीर्घ, नत्व, णत्व।

(2) क्षितायुः
पक्ष में दीर्घ नहीं हुआ।

(ख) दैन्ये—

(3) क्षीणकः
दीर्घ हुआ।

(4) क्षितकः
पक्ष में दीर्घ नहीं हुआ।

(5) क्षीणः (पूर्ववत्)।
(6) क्षितः
दीर्घ नहीं हुआ।

**(3063) स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च *62* (2757)**

स्य, सिच्, सीयुट्, तासि-इत्येतेषु भावकर्मविषयेषु परत उपदेशेऽजन्तानामङ्गानाम्, हन्, ग्रह, दृश्-इत्येतेषां च चिण्वत्कार्यं भवति वा। यदा चिण्वत् तदा इडागमो भवति। कस्य? स्यसिच्सीयुट्तासीनामेवेति वेदितव्यम्; ते हि प्रकृताः। अङ्गस्य तु लक्ष्यविरोधान्न क्रियते। कानि पुनरस्य योगस्य प्रयोजनानि?

चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं
दीर्घश्चोक्तो यो मितां वा चिणीति।
इट् चासिद्धस्तेन मे लुप्यते णि-
र्नित्यश्चायं वल्निमित्तो विघाती॥
(म०भा०, श्लो०वा०)

अजन्तानां तावत्-चायिष्यते, चेष्यते, अचायिष्यत, अचेष्यत। दायिष्यते, दास्यते, अदायिष्यत, अदास्यत। शामिष्यते, शमिष्यते, शमयिष्यते, अशामिष्यत, अशमिष्यत, अशमयिष्यत। हन्-घानिष्यते, हनिष्यते, अघानिष्यत, अहनिष्यत। ग्रह-ग्राहिष्यते, ग्रहीष्यते, अग्राहिष्यत, अग्रहीष्यत। 'ग्रहोऽलिटि दीर्घः' (7.2.37) इति प्रकृतस्येटो दीर्घत्वम्। दृश्-दर्शिष्यते, द्रक्ष्यते, अदर्शिष्यत, अद्रक्ष्यत। सिच्यजन्तानाम्-अचायिषाताम्, अचेषाताम्। अदायिषाताम्, अदिषाताम्। अशामिषाताम्। अशमिषाताम्, अशमयिषाताम्। हन्-अघानिषाताम्, अवधिषाताम्, अहसाताम्। ग्रह्-अग्राहिषाताम्, अग्रहीषाताम्। दृश्-अदर्शिषाताम्, अदृक्षाताम्। सीयुटि अजन्तानाम्-चायिषीष्ट, चेषीष्ट। दायिषीष्ट, दासीष्ट। शामिषीष्ट, शमिषीष्ट, शमयिषीष्ट। हन्-घानिषीष्ट, वधिषीष्ट। ग्रह-ग्राहिषीष्ट, ग्रहीषीष्ट। दृश्-दर्शिषीष्ट, दृक्षीष्ट। तासावजन्तानाम्-चायिता, चेता। दायिता, दाता। शामिता, शमिता, शमयिता। हन्-घानिता, हन्ता। ग्रह-ग्राहिता, ग्रहीता। दृश्—दर्शिता, दर्ष्टा, द्रष्टा। स्यसिच्सीयुटतासिष्विति किम्? चेतव्यम्, दातव्यम्। भावकर्मणोरिति किम्? चेष्यति। दास्यति। उपदेश इति किम्? कारिष्यते-इति गुणे कृते रपरत्वे च न प्राप्नोति, उपदेशग्रहणाद् भवति। अज्झनग्रहदृशामिति किम्? पठिष्यते। अङ्गाधिकारविहितं कार्यमिहातिदिश्यते, तेन हनिणिङामादेशा न भवति। हनिष्यते, घानिष्यते। एष्यते, आयिष्यते। अध्येष्यते, अध्यायिष्यते। 'हनो वध लिङि' (2.4.42), 'लुङि च' (2.4.43), 'इणो गा लुङि' (2.4.45), 'विभाषा लुङ्लृङोः' (2.4.50) इत्येते विधयो न भवन्ति।

अर्थ—भाव तथा कर्म गम्यमान हों तो उपदेश में जो अच् वर्ण, तदन्त अंग तथा हन्, ग्रह् व दृश—इन अंगों को स्य, सिच्, सीयुट् तथा तास् परे रहते विकल्प से चिण्वद्भाव होता है तथा चिण्वद्भाव पक्ष में 'स्य' आदि को 'इट्' आगम होता है।

प्रकृत सूत्र में 'आर्धधातुके' का अधिकार है। अतः 'सीयुट्' के द्वारा आर्धधातुक सीयुट् (आशीर्लिङ्) का ग्रहण होता है। चिण्वद्भाव अंग को होता है तथा इट् आगम 'स्य' आदि को होता है[1]।

1. महा० 6.4.62 यावान् इण् नाम स सर्व आर्धधातुकस्यैव भवति।

चिण्वद्भाव का अर्थ यह है कि चिण् होने पर जो अंगकार्य होते हैं, वे सभी कार्य 'स्य' आदि के परे रहते होंगे। चिण् के णकार व चकार की इत्संज्ञा होती है।

**कानि०**—चिण्वद्भाव के क्या प्रयोजन हैं ? इन प्रयोजनों को निम्नलिखित कारिका में निबद्ध कर दिया गया है—

**चिण्वद्वृद्धिः**—चिण् परे रहते णिन्निमित्तक (अत उपधायाः/ अचो ञ्णिति) वृद्धि होती है।

**युक्च०**—चिण् परे रहते आकारान्त धातु को युक् आगम (आतो युक् चिण्०) होता है।

**हन्तेश्च घत्वम्०**—चिण् परे रहते हन् धातु के हकार के स्थान पर घकार (हो हन्ते०) होता है।

**दीर्घ—चिणीति**—चिण् परे रहते मित् अंग की उपधा को पाक्षिक दीर्घ होता है (चिण्णमुलोर्दीर्घोऽन्य०)।

**ईट्—णिः**—चिण्वद्भाव करने पर 'स्य' आदि को जो इट् आगम होता है, वह आभीय कार्य होने से असिद्ध है। तब 'णेरनिटि' से णिलोप हो जाता है।

**नित्य—विघाती**—यह इट् आगम नित्य तथा वलादि लक्षण वाला इट् अनित्य होता है।[1]

**उदा० (क) अजन्तानाम् स्ये—**

(1) चायिष्यते
चि स्य त—कर्मवाच्य, लृट्, स्य,
चि इट् स्य त—चिण्वद्भाव, वृद्धि,
चै इ स्य त—आयादेश,
चायिष्यते—आदेशप्रत्यययोः, टित आत्मने०।

(2) चेस्यते
पक्ष में स्य, गुण।

(3) अचायिष्यत
अ चि स्य त—कर्मवाच्य, लृङ्,
अ चै इट् स्य त—चिण्वद्भाव, इट्, वृद्धि,
अ चाय् इ स्य त—आय्,
अचायिष्यत—षत्व।

(4) अचेष्यत
पक्ष में गुण हुआ।

(5) दायिष्यते
दा स्य त—कर्मवाच्य, लृट्,
दा युक् इट् स्य त—पूर्ववत्, युक्, इट्,
दायिष्यते—मूर्धन्य।

(6) दास्यते
पक्ष में चिण्वद्भाव नहीं हुआ।

(7) अदायिष्यत
अ दा स्य त—लृङ्, चिण्वद्भाव,
अ दा य् इ स्य त—युक् आगम।

(8) अदास्यत
चिण्वद्भाव नहीं हुआ।

(9) शामिष्यते
शम् स्य त—चिण्वद्भाव, जनीजृष्क्नसु० भ्वा० गण सूत्र से मित् संज्ञा, मितां ह्रस्वः,
शाम् इ स्य त—अत उपधायाः। 'असिद्धवदत्राभात्' से इट् के असिद्ध होने से णिलोप।

(10) शमिष्यते
पक्ष में।

(11) शमयिष्यते
णिच् पक्ष, वलादिक इट्।

(12) अशामिष्यत
अट् शम् स्य त—लृङ्, चिण्वद्भाव,
अ शाम् इ स्य त—पूर्ववत्।

(13) अशमिष्यत
पक्ष में।

(14) अशमयिष्यत
णिच् इट्।

**(ख) हनः स्ये—**

(15) घानिष्यते
हन् स्य त—चिण्वद्भाव,
घान् इ स्य त—अत उपधायाः, हो हन्तेर्०,
घानि स्य ते—मूर्धन्य।

(16) हनिष्यते

---

1. भावि तास् त—इस स्थल पर 'स्यसिच्सीयुट्०' से चिण्वदिट् तथा 'आर्धधातुकस्येड्' से इट्—दोनों युगपत् प्राप्त हैं। परत्व से वलादि लक्षण इट् प्राप्त हुआ, परन्तु चिण्वदिट् नित्य है। अतः नित्य कार्य के बलवान् होने से चिण्वदिट् हुआ।
भाविता।

चिण्वद्भाव नहीं हुआ।

(17) अघानिष्यत
अट् हन् स्य त—चिण्वद्भाव,
अ घान् इ स्य त—पूर्ववत्।

(18) अहनिष्यत
चिण्वद्भाव नहीं हुआ।

(ग) ग्रहः स्ये—

(19) ग्राहिष्यते
ग्रह् स्य त—लृट्, अत उपधायाः, इट्,
ग्राह् इ स्य त—मूर्धन्य,
ग्राहिष्यते—एत्व।

(20) ग्रहीष्यते
चिण्वद्भाव नहीं हुआ, ग्रहोऽलिटि० से दीर्घ।

(21) अग्राहिष्यत
अट् ग्रह् स्य त—पूर्ववत्, उपधादीर्घ, इट्,
अ ग्राहि ष्य त—षत्व।

(22) अग्रहीष्यत
अट् ग्रह् स्य त—लृङ्, चिण्वद्भाव, वलादिक इट्,
अ ग्रहीष्य त—पूर्ववत् दीर्घ।

(घ) दृशः स्ये—

(23) दर्शिष्यते
दृश् स्य त—लृट्, चिण्वद्भाव,
दर्श् इ स्य त—गुण, मूर्धन्य।

(24) द्रक्ष्यते
दृश् स्य त—चिण्वद्भाव नहीं हुआ,
द्रक् स्यत—मूर्धन्य आदेश।

(25) अदर्शिष्यत
अट् दृश् स्य त—लृङ्, चिण्वद्भाव,
अदर्श् इ स्य त—गुण, मूर्धन्य।

(26) अद्रक्ष्यत
अद्रश् स्य त—पक्ष में,
अद्रक् ष्य त—पूर्ववत्।

(ङ) अजन्तानां सिचि—

(27) अचायिषाताम्
अ चि सिच् आताम्—लुङ्, सिच्, चिण्वद्भाव,
अ चै इ स् आताम्—अचो ञ्णिति,
अ चाय् इ साताम्—आय् आदेश,
अचायिषाताम्—षत्व।

(28) अचेषाताम्
अ चि स् आताम्—पक्ष में चिण्वत् नहीं हुआ,
अ चे स् आताम्—गुण,
अचेषाताम्—षत्व।

(29) अदायिषाताम्
अ दा सिच् आताम्—चिण्वद्भाव,
अ दा य् इ स् आताम्—आतो युक्०,
अदायिष् आताम्—मूर्धन्य।

(30) अदिषाताम्
अ दा स् आताम्—स्थाघ्वोरिच्च,
अ दि स् आताम्—षत्व,
अ दि ष् आताम्—आदेशप्रत्यययोः।

(31) अशामिषाताम्
अ शम् स् आताम्—लुङ्, सिच्,
अ शाम् इ स् आताम्—अत उपधायाः,
अशामि ष् आताम्—षत्व।

(32) अशमिषाताम्
अ शम् इट् स् आताम्—चिण्वद्भाव नहीं हुआ,
अशमिष् आताम्—वलादिलक्षण इट्, षत्व।

(33) अशमयिषाताम्
अ शम् णिच् इट् स् आताम्—गुण, अयादेश, षत्व आदि होकर।

(च) हनः सिचि—

(34) अघानिषाताम्
अ हन् स् आताम्—चिण्वद्भाव,
अ हान् इ स् आताम्—अत उपधायाः,
अघान् इ ष् आताम्—हो हन्ते०, षत्व।

(35) अवधिषाताम्
अ वध् इट् स् आताम्—चिण्वद्भाव नहीं हुआ, 'लुङि च' से 'वध' आदेश, वलादिलक्षण इट्।

(36) अहसाताम्
अ हन् स् आताम्—'हनः सिच्' से कित्व, 'अनुदात्तोपदेश-वन०' से नकारलोप।

**(घ) ग्रहः सिचि—**

(37) अग्राहिषाताम्

अ ग्रह् स् आताम्—लुङ्, चिण्वद्भाव, अत उपधायाः, षत्व आदि,

अ ग्राहिष् आताम्—पूर्ववत्।

(38) अग्रहीषाताम्

अ ग्रह् इ स् आताम्—पक्ष में वलादिलक्षण इट्, 'ग्रहोऽलि०' से दीर्घ।

**(ज) दृशः सिचि—**

(39) अदर्शिषाताम्

अ दृश् स् आताम्—चिण्वद्भाव, लघूपधगुण, इट्,

अ दर्श् इ ष् आताम्—षत्व।

(40) अदृक्षाताम्

अ दृश् स् आताम्—पक्ष में, लिङ्सिचावा०,

अदृक् स् आताम्—व्रश्चभ्रस्ज०, षढोः कः सि,

अदृक् ष् आताम्—मूर्धन्य।

**(झ) अजन्तानां सीयुटि—**

(41) चायिषीष्ट

चि सीयुट् त—आ० लिङ, लिङः सीयुट्०, चिण्वद्भाव, इट्,

चि इ सीयुट् सुट् त—सुट् तिथोः, अचो ञ्णिति,

चै इ सीय् स् त—आयादेश, यकारलोप,

चायि षी ष् ट—षत्व, ष्टुत्व।

(42) चेषीष्ट

चि सीयुट् सुट् त—पूर्ववत्, चिण्वद्भाव नहीं हुआ,

चेषीष्ट—आर्धधातुक गुण, शेष पूर्ववत्।

(43) दायिषीष्ट

दा सीयुट् सुट् त—चिण्वद्भाव,

दा य् इ सीय् स् त—आतो युक्०, इट्, यलोप,

दायि षी ष् ट—षत्व, ष्टुत्व।

(44) दासीष्ट

दा सीय् स् त—चिण्वद्भाव अभाव,

दा सीष् ट—षत्व, ष्टुत्व।

(45) शामिषीष्ट

शम् सीयुट् सुट् त—चिण्वद्भाव,

शाम् इ सीय् स् त—अत उपधायाः, इट्, यलोप,

शामि षी ष् ट—षत्व, ष्टुत्व।

(46) शमिषीष्ट

शम् इ सीय् स् त—चिण्वद्भाव अभाव, वलादिक इट्,

शमि षी ष् ट—षत्व, ष्टुत्व।

(47) शमयिषीष्ट

शम् णिच् इट् सीय् स् त—णिच्, वलादिक इट्,

शमे इ सी स् त—गुण, यलोप,

शमयि षी ष् ट—अयादेश, षत्व, ष्टुत्व।

**(ञ) हनः सीयुटि—**

(48) घानिषीष्ट

हन् सीयुट् सुट् त—चिण्वद्भाव, इट्,

घान् इ सीय् स् त—अत उपधायाः, हो हन्ते०, यलोप,

घानि षी ष् ट—षत्व, ष्टुत्व।

(49) वधिषीष्ट

वध् इ सीय् सुट् त—चिण्वद्भाव अभाव,

वधि षी ष् ट—वलादिक इट्, षत्व, ष्टुत्व।

**(ट) ग्रहः सीयुटि—**

(50) ग्राहिषीष्ट

ग्रह् सीयुट् सुट् त—चिण्वद्भाव, इट्,

ग्राह् इ सीय् स् त—अत उपधायाः, यलोप,

ग्राहि षी ष् ट—षत्व, ष्टुत्व।

(51) ग्रहीषीष्ट

ग्रह् इ सीय् स् त—पक्ष में वलादिलक्षण इट्,

ग्रही षी ष् ट—ग्रहोऽलिटि दीर्घः।

**(ठ) दृशः सीयुटि—**

(52) दर्शिषीष्ट

दृश् सीय् स् त—चिण्वद्भाव, इट्

दर्श् इ सीय् स् त—गुण, यलोप,

दर्शि षी ष् ट—पूर्ववत्।

(53) दृक्षीष्ट

दृश् सीय् स् त—पक्ष में,

दृक् षी ष् ट—व्रश्चभ्रस्ज०, षढो कः सि,

**(ड) अजन्तानां तासि—**

(54) चायिता

चि तास् डा—लुट्, तिप्, डा, चिण्वद्भाव, इट्,

चै इ त् आ—अचो ञ्णिति, टिलोप,

चाय् इ ता—आय्।

(55) चेता
चि तास् डा—पक्ष में,
चेता—गुण।

(56) दायिता
दा तास् डा—चिण्वद्भाव,
दा य् ता—टिलोप, युक्।

(57) दाता
दा तास् डा—पक्ष में,
दा त् आ—टिलोप।

(58) शामिता
शम् तास् डा—चिण्वद्भाव, इट्,
शाम् इ तास् डा—अत उपधायाः,
शामि त् आ—टिलोप।

(59) शमिता
शम् इ तास् डा—पक्ष में वलादिक इट्,
शमि त् आ—टिलोप।

(60) शमयिता
शम् णिच् इट् तास् डा—वलादिक इट्,
शमि इ त् आ—टिलोप।

**(ढ) हनः तासि—**

(61) घानिता
हन् तास् डा—चिण्वद्भाव, इट्,
हान् इ त् आ—अत उपधायाः, टिलोप,
घानि त् आ—हो हन्ते०।

(62) हन्ता
हन् तास् डा—पक्ष में,
हन् त् आ—टिलोप।

**(ण) ग्रहः तासि—**

(63) ग्राहिता
ग्रह् तास् डा—चिण्वद्भाव, इट्,
ग्राह् इ तास् डा—अत उपधायाः,
ग्राहि त् आ—टिलोप।

(64) ग्रहीता
ग्रह् इ तास् डा—पक्ष में वलादिक इट्,
ग्रही त् आ—ग्रहोऽलिटि०।

**(त) दृशः तासि—**

(65) दर्शिता
दृश तास् डा—चिण्वद्भाव, इट्,
दर्श् इ त् आ—गुण, टिलोप,
दर्शि त् आ—पूर्ववत्।

(66) दर्ष्टा
दृश तास् डा—पक्ष में,
दर्श् त् आ—टिलोप, गुण,
दर्ष् टा—व्रश्च०, ष्टुत्व।

(67) द्रष्टा
दृश् तास् डा—पक्ष में,
द्रश् त् आ—अम्, टिलोप,
द्रष् टा—व्रश्चभ्रस्ज०।

**स्यसिच्** आदि परे रहते चिण्वद्भाव होता है।

(68) चेतव्यम्
चि तव्यत्—कर्म में तव्यत् है, स्य आदि न होने से चिण्वद्भाव नहीं हुआ।

(69) दातव्यम् (पूर्ववत्)।

**भाव व कर्म** में ही चिण्वद्भाव होता है।

(70) चेष्यति
चि स्य तिप्—लृट्, न भाव है तथा न कर्म है, अतः चिण्वद्भाव नहीं हुआ।

(71) दास्यति
दा स्य तिप्—पूर्ववत् चिण्वद्भाव नहीं हुआ, तब युक् आगम नहीं हुआ।

**उपदेश०—उपदेश में जो अजन्त,** उसे चिण्वद्भाव होता है।

(72) कारिष्यते
कृ इ स्य त—'कर्' अजन्त नहीं है, तब चिण्वद्भाव नहीं हुआ, परन्तु 'कृ' उपदेश में अजन्त है। अतः चिण्वद्भाव हुआ,
कारि ष्यते—षत्व।

**अज्झन०—अजन्त, हन्, ग्रह्** तथा **दृश्**—इनको ही चिण्वद्भाव होता है।

(73) पठिष्यते

पठ् इ स्य त—कर्म अर्थ है, 'स्य' परे है; परन्तु उपदेश में अजन्त नहीं है। अतः चिण्वद्भाव नहीं हुआ। वलादिलक्षण इट् हुआ।

**अङ्गाधि॰**—अंगाधिकार में विहित कार्य का यहाँ अतिदेश किया जा रहा है। अतः हन्, इण् व इङ् को आदेश नहीं होते हैं।

(74) हनिष्यते
हन् स्य त—ऋद्धनोः स्ये,
हन् इ स्य त—षत्व।

(75) घानिष्यते
हन् स्य त—स्यतासी॰,
घान् इ स्य त—उपधावृद्धि, कुत्व।

(76) एष्यते
इ स्य त—सार्वधातुकार्धधातु॰,
ए स्य त—षत्व।

(77) आयिष्यते
इ स्य त—इट्,
ऐ इ स्य त—वृद्धि,
आयिस्यत—आय्, षत्व, एत्व।

(78) अध्येष्यते
अधि इ स्य त—इको यणचि,
अधि ए स्य त—गुण,
अध्ये ष्य ते—यण्, षत्व।

(79) अध्यायिष्यते
अधि इ स्य त—
अधि ऐ इ स्य त—वृद्धि,
अध्यायि ष्यते—आय्, षत्व, एत्व।

## (3064) दीङो युडचि क्ङिति *63* (2507)

**दीङो युडागमो भवति अजादौ क्ङिति प्रत्यये परतः। उपदिदीये, उपदिदीयाते, उपदिदीयिरे। 'दीङः' इति पञ्चमीनिर्देशादजादेर्युडागमो भवति। विधानसामर्थ्याच्च 'एरनेकाचः' (6.4.82) इति यणादेशे कर्त्तव्ये तस्यासिद्धत्वं न भवति। अचीति किम्? उपदेदीयते। क्ङितीति किम्? उपदानम्।**

**अर्थ**—दीङ् से उत्तर अजादि कित् व ङित् प्रत्ययों को युट् आगम होता है। उकार व टकार की इत्संज्ञा है।

**उदा॰** (1) उपदिदीये
दी त → दि ए—लिट्, लिटस्तझयो॰,
दी दीय् ए—असंयोगाल्लिट्॰, गुण का निषेध, युट्, द्वित्व, हलादि शेष,
उपदिदीये—ह्रस्वः।

(2) उपदिदीयाते
उप दि दीय् आताम्—सभी कार्य पूर्ववत्।

(3) उपदिदीयिरे
झ, 'लिटस्तझयोरेशिरेच्' से 'इरेच्' हुआ, शेष पूर्ववत्।

'दीङः' में पञ्चमी विभक्ति है। 'अचि' में सप्तमी निर्देश है। पञ्चमी का निर्देश बलवान् होता है। अतः दीङ् से उत्तर अव्यवहित अजादि का आदि अवयव युट् होता है।

दि दी य् ए—इस दशा में 'दीङो युडचि॰' (6.4.63) से विहित 'युट्' 'असिद्धवदत्राभात्' से असिद्ध हुआ। 'एरनेका॰' से यणादेश प्राप्त हुआ। 'वुग्युटावुवङ्यणो॰' से युट् आगम सिद्ध हो गया। यणादेश नहीं हुआ।

**अचीति॰**—अजादि प्रत्यय को 'युट्' होता है।

(4) उपदेदीयते
उप दी यङ्—सन्यङोः, ङित् है परन्तु अजादि नहीं है, युट् नहीं हुआ,
उपदेदीय—धातुसंज्ञा, लट्।

**क्ङिती॰**—कित् व ङित् को ही 'युट्' होता है।

(5) उपदानम्
उप दी ल्युट्—युवोरनाकौ,
उप दी अन—अजादि प्रत्यय है परन्तु न तो कित् है तथा न ही ङित् है, युट् नहीं हुआ,
उप दा अन सु—मीनातिमिनोति॰ से आत्व।

## (3065) आतो लोप इटि च *64* (2372)

**इट्यजादावार्धधातुके क्ङिति चाकारान्तस्याङ्गस्य लोपो भवति। इटि–पपिथ। तस्थिथ। किति–पपतुः, पपुः। तस्थतुः, तस्थुः। गोदः। कम्बलदः। ङिति–प्रदा। प्रधा। 'आर्धधातुके' इत्येव–यान्ति। वान्ति। व्यत्यरे। व्यत्यले। रातेर्लातेश्च लङि इटि रूपम्। अचीत्येव–ग्लायते। दासीय।**

**अर्थ**—अंगसंज्ञक शब्द के आकार का लोप होता है, अजादि कित् व ङित् तथा अजादि आर्धधातुक इट् परे रहते।

उदा० (क) इटि—

(1) पपिथ

पा थल्—लिट्, सिप्, परस्मैपदानां णल०, एकाच उपदेशे०, कृसुभृवृ०, अचस्तास्व०, ऋतो भारद्वाजस्य,

प प् इ थ—आकारलोप।

(2) पपाथ—पक्ष में।

(3) तस्थिथ

स्था इ थ—पूर्ववत् थल्, द्वित्व, अभ्यासकार्य,

त स्थ् इ थ—शर्पूर्वाः खयः, अभ्यासे चर्च, आकारलोप।

(ख) किति—

(4) पपतुः

पा अतुस्—असंयोगाल्लिट्०, लिट् च, आकारलोप व द्वित्व—दोनों की युगपत् प्राप्ति, परत्व के कारण आकारलोप, द्विर्वचनेऽचि से रूपातिदेश, द्वित्व,

पा प् अतुस्—ह्रस्वः,

प प् अतुस्—रूप बना।

(5) पपुः

पा उस्—'झि' को 'उस्',

प प् उस्—शेष कार्य पूर्ववत्।

(6) तस्थतुः

स्था अतुस्—प्र० पु० द्विवचन,

त स्थ् अतुस्—पूर्ववत्।

(7) तस्थुः

स्था उस्—पूर्ववत्,

त स्थ् उस्—आकारलोप।

(8) गोदः

गो दा क—आतोऽनुपसर्गे कः,

गो द् अ सु—आकारलोप।

(9) कम्बलदः

कम्बल दा क—पूर्ववत्,

कम्बल द् अ सु—आकारलोप।

(ग) ङिति—

(10) प्रदा

प्र दा अङ्—आकारलोप,

प्र द् अ टाप् सु—टाप्, विभक्तिकार्य।

(11) प्रधा

प्र धा अङ्—पूर्ववत्,

प्र ध् अ टाप् सु—पूर्ववत्।

**आर्धधा०—आर्धधातुक** परे रहते आकारलोप होता है।

(12) यान्ति

या झि—झोऽन्तः, सार्वधातुकमपित्, ङित् है परन्तु आर्धधातुक न होने से आकारलोप नहीं होता है।

(13) वान्ति (पूर्ववत्)।

(14) व्यत्यरे

वि अति रा इट्—कर्मव्यतिहार अर्थ, कर्त्तरि कर्मव्यतिहारे, से आत्मनेपद, लङ्, उ०पु० एकवचन,[1] अट्,

वि अति अ रा इ—अजादि है परन्तु आर्धधातुक नहीं है, आकारलोप नहीं हुआ, 'आद्गुणः' से गुण।

(15) व्यत्यले

वि अति अट् ला इ—पूर्ववत्।

**अचीत्ये०—अजादि** परे रहते ही आकारलोप होता है।

(16) ग्लायते

ग्लै यक् त—भाव में लकार, सार्वधातुके यक्,

ग्ला य ते—आदेच उपदेशेऽशिति, यक् कित् है परन्तु अजादि न होने से आकारलोप नहीं होता है।

(17) दासीय

दा सीयुट् इट्—आशीर्लिङ्, इटोऽत्,

दा सीय् अत्—लिङाशिषि, से आर्धधातुक संज्ञा, सीयुट् अजादि नहीं हैं,

दासीय् अ—आकारलोप नहीं हुआ।

(18) जाग्लायते[2]

ग्लै चङ्—आत्व, द्वित्व।

गा ग्ला य—हलादि शेष, ह्रस्वः, कुहोश्चुः, दीर्घ,

1. सूत्रस्थ 'इटि' पद के द्वारा इट् आगम का ग्रहण होता है या उ०पु० एकवचन के इट् प्रत्यय का ? इस विषय में दो मत हैं—

(क) नागेशप्रभृति विद्वान् यहाँ वलादिक इट् आगम का ग्रहण करते हैं। इस दशा में 'आर्धधातुके' पद के अध्याहार की कोई आवश्यकता नहीं है।

(ख) दीक्षितप्रभृति विद्वान् 'इट्' के द्वारा इट् आगम व इट् प्रत्यय दोनों का ग्रहण करते हैं। इनके मत में 'इटि' पद का 'आर्धधातुके' विशेषण अनिवार्य हो जाता है, अन्यथा 'व्यत्यरे' आदि रूप सिद्ध नहीं हो पाते हैं (द्र०—वै०सि०कौ० सूत्र 2372 तथा बाल० सूत्र 2372)।

2. यह प्रत्युदाहरण काशिका में नहीं है।

जाग्लाय—धातुसंज्ञा, यङ् ङित् है, आर्धधातुक है परन्तु अजादि नहीं है, आकारलोप नहीं हुआ,

जाग्लायते—लट्, त, शप्।

### (3066) ईद्यति *65* (2843)

**ईकार आदेशो भवति आकारान्तस्याङ्गस्य यति परतः। देयम्। धेयम्। हेयम्। स्तेयम्।**

**अर्थ**—आकारान्त अंग को 'ईत्' आदेश होता है, 'यत्' परे रहते।

**उदा० (1) देयम्**
दा यत्—अंगसंज्ञा,
दी य—ईत् आदेश,
देय सु—सार्वधातुकार्धधातु०।

**(2) धेयम्**
धा यत्—पूर्ववत्।

**(3) हेयम् (पूर्ववत्)।**
**(4) स्तेयम् (पूर्ववत्)।**

**विशेष**—चाहे ह्रस्व इकार के स्थान पर अथवा दीर्घ ईकार के स्थान पर गुण किया जाय—दोनों ही स्थितियों में कोई अन्तर नहीं पड़ता। अतः प्रकृत सूत्र में 'ईत्' के स्थान पर 'इत्' का पाठ करने में लाघव होता है।

(समा०) वस्तुतः 'ईत्' उत्तर शास्त्र के लिए है।[1]

ईत् में तकार उच्चारणार्थ है। ईकार के अण् में गृहीत न होने से यह अपने सवर्णों का ग्राहक नहीं बन सकता।[2]

### (3067) घुमास्थागापाजहातिसां हलि *66* (2462)

**घुसंज्ञकानामङ्गानां मा, स्था, गा, पा, जहाति, सा- इत्येतेषां हलादौ क्ङिति प्रत्यये परत ईकारादेशो भवति। दीयते, देदीयते। धीयते, देधीयते। मीयते, मेमीयते। स्थीयते, तेष्ठीयते। गीयते, जेगीयते। अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। पीयते, पेपीयते। पातेरिह ग्रहणं नास्ति; लुग्विकरणत्वात्। पायते-इत्येव तस्य भवति। हीयते। जेहीयते। जहातेरिह निर्देशाद् जिहातेर्ग्रहणं न भवति। हायते। 'षोऽन्तकर्मणि' (धा०पा० 1148)- अवसीयते, अवसेसीयते। हलीति किम्? ददतुः, ददुः। आतो लोपाद्धि परत्वादीत्वं स्यात्। एतदेव हल्ग्रहणं ज्ञापकम्-अस्मिन् प्रकरणे विप्रतिषेधेनासिद्धत्वं भवति। 'क्ङिति' इत्येव-दाता। धाता।**

**अर्थ**—घु, मा, स्था, गा, पा, ओहाक् तथा षो—इन अंग-संज्ञकों के आकार के स्थान पर 'ईत्' होता है, हलादि कित् ङित् आर्धधातुक परे रहते।

**उदा० (क) घुसञ्ज्ञकस्य—**

(1) दीयते
दा यक् त—सार्वधातुके यक्,
दीयते—ईत्, एत्व।

(2) देदीयते
दा यङ् → दी यङ्—ईत्,
दी दी य—द्वित्व,
दे दीयत—गुण, लकार।

(3) धीयते
'दीयते' की तरह।

(4) देधीयते
'देदीयते' की तरह। 'अभ्यासे चर्च' विशेष होता है।

**(ख) माधातोः—**

(5) मीयते
मा यक् त—'ईत्' हुआ,
मीयते—एत्व।

(6) मेमीयते
मा यङ् → मी य—'ईत्' हुआ, द्वित्व,
मे मी य शप् त—गुण, लट्।

**(ग) स्थाधातोः—**

(7) स्थीयते
स्था यक् त—पूर्ववत्।

(8) तेष्ठीयते
स्था यङ् → स्थी यङ्—ईत् हुआ,
थी स्थी य—द्वित्व, शर्पूर्वाः खयः,
तेष्ठीयते—अभ्यासे चर्च, गुण, ष्टुत्व।

**(घ) गारूपधातोः—**

(9) गीयते

1. न्यास० ६.४.६५ दीर्घोच्चारणमुत्तरार्थम्।
2. न्यास० ६.४.६५ तकार उच्चारणार्थः।

गै → गा यक् त—आत्व,
गीयत—ईत्,
गीयते—एत्व।

(10) जेगीयते
गै → गा यङ्—गी यङ्—ईत्, द्वित्व,
जी गी य—कुहोश्चुः,
जेगीयते—गुण, धातुसंज्ञा, 'त'।

(11) अध्यगीष्ट
इङ् → गाङ् लुङ्—लुङ् की विवक्षा में पाक्षिक गाङ्,
अधि गा स् त—च्लि, सिच्, गाङ्कुटादि० से ङित्,
अधि गी ष् त—ईत्, षत्व,
अध्यगीष्ट—अट्, यण्, ष्टुत्व।

(12) अध्यगीषाताम्
अधि गा स् आताम्—प्र०पु० द्विवचन, शेष पूर्ववत्,
अधि अ गी ष् आताम्—ईत्, षत्व,
अध्यगीषाताम्—यण्।

(13) अध्यगीषत
अधि गा स् झ—आत्मनेपदेष्वनतः,
अधि अ गी स् अत—ईत्,
अध्यगीषत—षत्व, यण्।

**(ङ) पाधातोः—**
(14) पीयते
पा यक् त—ईत्,
पी य ते—एत्व।

(15) पेपीयते
पा यङ्—यङ्, ईत्,
पी पी य—द्वित्व, गुण,
पे यी य—धातुसंज्ञा,
पेपीय शप् त—शप्,
पेपीयते—रूप बना।

**पातेरिह०**—'पा' धातु का यहाँ ग्रहण नहीं है। 'पा' आदादिक धातु है। इससे शप् लुक् होता है।

(16) पायते
पा यक् त—'ईत्' नहीं हुआ।

**(च) हाधातोः—**
(17) हीयते
हा यक् त—ईत्।

(18) जेहीयते
हा यङ् → ही य—ईत्,
जिहीय—द्वित्व, ह्रस्वः, कुहोश्चुः, अभ्यासे चर्च,
जे हीय त—धातुसंज्ञा।

**जहाते०**—'जहाति' इस निर्देश से यहाँ 'जिहाति' (ओहाङ् गतौ) का ग्रहण नहीं होता है।

(19) हायते
हा यक् त—'ईत्' नहीं हुआ।

**(छ) षोधातोः—**
(20) अवसीयते
अव षो यक् त—धात्वादेः षः सः, ईत्,
अवसीयते—एत्व।

(21) अवसेसीयते
अव सो यङ्—ईत्,
अव सी सी य—द्वित्व,
अवसेसीयते—गुण, धातुसंज्ञा, 'त'।

**हलीति०**—हलादि परे रहते ही ईत् होता है।

(22) ददतुः
दा अतुस्—कित् है परन्तु हलादि नहीं है, अतः ईत् नहीं हुआ,
द् अतुस्—आकारलोप, रूपातिदेश, द्वित्व,
दा द् अतुस्—ह्रस्वः।

(23) ददुः
'झि' को 'उस्' आदेश, शेष पूर्ववत्।

**आतो०**—आकार के लोप की अपेक्षा पर होने से ईत्व होता। प्रस्तुत सूत्र में हल् ग्रहण ज्ञापक है कि इस प्रकरण में विप्रतिषेध से असिद्धभाव होता है।

प्रस्तुत सूत्र 'दीयते' आदि में (अर्थात् हल् परे रहते) सावकाश है तथा 'आतो लोप इटि च' सूत्र 'ययतुः' आदि में सावकाश है। 'ददतुः' में आलोप तथा ईत्व युगपत् प्राप्त होते हैं। ईत्व पर है। परशास्त्र के बलवान् होने से ईत्त्व होना चाहिए।

(शंका) यहाँ असिद्ध प्रकरण हैं। अतः आलोप तथा ईत्त्व—दोनों कार्य असिद्धवत् हैं। तब इनमें पूर्वता व परता का प्रश्न ही नहीं उठता है ?

(समा०) प्रकृत सूत्र में 'हलि' पद के ग्रहण से ज्ञापित होता

है कि असिद्धभाव प्रकरण में विप्रतिषेध होता है। यदि असिद्ध प्रकरण में विप्रतिषेध न होता तो 'गो दा क' इस स्थल पर आलोप होकर 'गोद' शब्द बन जायेगा तथा परशास्त्र (ईत्त्व) की प्राप्ति ही नहीं होगी। तब प्रकृत सूत्र में 'हलि' पद व्यर्थ होकर ज्ञापित करता है कि असिद्ध प्रकरण में विप्रतिषेध होता है।

**क्ङिति०**—कित् व ङित् में ही ईत् होता है।

(24) दाता

दा तृ—हलादि है परन्तु कित् व ङित् नहीं है, अतः ईत् नहीं हुआ।

(25) धाता (पूर्ववत्)।

## (3068) एर्लिङि *67* (2374)

**घुमास्थागापाजहातिसामङ्गानां लिङि परत एकारादेशो भवति। देयात्। मेयात्। धेयात्। स्थेयात्। गेयात्। पेयात्। अवसेयात्। 'क्ङिति' इत्येव-दासीष्ट। धासीष्ट।**

**अर्थ**—घुसंज्ञक धातु, मा, स्था, गा, पा, हा तथा षो—इन अंगों को एकार आदेश होता है, कित् व ङित् लिङ् परे रहते।

**उदा०** (1) देयात्
दा यासुट् ति—लिङ्, यासुट् परस्मैपदे०, किदाशिषि,
दा या स्त्—इतश्च,
दा या त्—सलोप,
देयात्—एत्व।

(2) धेयात्
धा यासुट् ति—पूर्ववत्,
धा यास् त्—इतश्च,
धेयात्—एत्व।

(3) मेयात्
मा यासुट् त्—पूर्ववत्
मे यास् त्—एकार,
मेयात्—सलोप।

(4) स्थेयात्
स्था यास् त्—पूर्ववत्,
स्थेयात्—एत्व।

(5) गेयात्
गै यास् त्—पूर्ववत्।

यहाँ गाङ् का ग्रहण नहीं होता है।

(6) पेयात्
पा यास् त्—पूर्ववत्,
पेयात्—एत्व।

(7) हेयात्
हा यास् त्—पूर्ववत्।

(8) अवसेयात्
षो → सो यास् त्—पूर्ववत्,
अवसेयात्—एत्व।

**क्ङिति०**—कित् व ङित् में ही एकार आदेश होता है।

(9) दासीष्ट
दा सीयुट् सुट् त—आत्मनेपद प्रत्यय,
दा सीय् स् त—कित् न होने से एत्व नहीं हुआ,
दासीष्ट—यकारलोप, षत्व, ष्टुत्व।

(10) धासीष्ट पूर्ववत्।

## (3069) वाऽन्यस्य संयोगादेः *68* (2378)

**घ्वादिभ्योऽन्यस्य संयोगादेराकारान्तस्य वा एकारादेशो भवति लिङि परतः। ग्लेयात्, ग्लायात्। म्लेयात्, म्लायात्। अन्यस्येति किम्? स्थेयात्। संयोगादेरिति किम्? यायात्। 'क्ङिति' इत्येव-ग्लासीष्ट। 'अङ्गस्य' इत्येव-निर्वायात्।**

**अर्थ**—कित् लिङ् परे रहते घुसंज्ञक, मा, स्था, गा, पा, हा तथा षो धातुओं से अतिरिक्त संयोग है आदि में जिसके, ऐसे अंगसंज्ञक के आकार को एकार आदेश विकल्प से होता है।

**उदा०** (1) ग्लेयात्
ग्लै → ग्ला यासुट् त्—आ० लिङ्, इतश्च, 'यास्त्' की 'लिङाशिषि' से आर्धधातुक संज्ञा हुई, 'किदाशिषि' से कित् हुआ,
ग्लेयात्—एकार, सलोप।

(2) ग्लायात्
पक्ष में एकार नहीं हुआ।

(3) म्लेयात्
म्लै → म्ला यास् त्—पूर्ववत्।

(4) म्लायात्
पक्ष में एकार नहीं हुआ।

**अन्यस्ये०**—घु आदि से अतिरिक्त अंग को ही एकार होता है।

(5) स्थेयात्

स्था यास् त्—यहाँ पाक्षिक एकार नहीं हुआ, नित्य एकार हुआ।

**संयोगा०—संयोग है आदि में जिसके, ऐसे अंग को एकार होता है।**

(6) यायात्

या यास् त्—'या' आकारान्त अंग है तथा घु आदि से अतिरिक्त भी है, परन्तु आदि में संयोग नहीं है,

यायात्—एकार नहीं हुआ।

**क्ङिति०—कित् व ङित् में ही एकार होता है।**

(7) ग्लासीष्ट

ग्लै → ग्ला सीयुट् सुट् त—'ग्ला' संयोगादि है, 'घु' आदि से अतिरिक्त है, इसके परे आर्धधातुक लिङ् है, परन्तु वह कित् नहीं है,

ग्लासीष्ट—एकार नहीं हुआ।

**अङ्गस्य—अंगसंज्ञक के आकार के स्थान पर एकार होता है।**

(8) निर्वायात्

यहाँ नहीं हुआ।

## (3070) न ल्यपि *69* (3335)

**ल्यपि प्रत्यये परतो घुमास्थागापाजहातिसां यदुक्तं तन्न (भवति)। प्रदाय। प्रधाय। प्रमाय। प्रस्थाय। प्रगाय। प्रपाय। प्रहाय। अवसाय।**

**अर्थ**—'घु' आदि अंग को जो कुछ विधान किया गया है, वह नहीं होता है, ल्यप् परे रहते। यहाँ ईत् का निषेध होता है।

**उदा०** (1) प्रदाय

प्र दा क्त्वा—'ल्यप्' हुआ,

प्र दा ल्यप्—ईत् नहीं हुआ,

प्रदाय सु—विभक्तिकार्य।

(2) प्रधाय (पूर्ववत्)।

(3) प्रमाय (पूर्ववत्)।

(4) प्रस्थाय (पूर्ववत्)।

(5) प्रगाय (पूर्ववत्)।

(6) प्रपाय (पूर्ववत्)।

(7) प्रहाय (पूर्ववत्)।

(8) अवसाय (पूर्ववत्)।

## (3071) मयतेरिदन्यतरस्याम् *70* (3318)

**मयतेरिकारादेशो वा भवति ल्यपि परतः। अपमित्य, अपमाय।**

**अर्थ**—मेङ् अंग को विकल्प से 'ईत्' आदेश होता है, ल्यप् परे रहते।

**उदा०** (1) अपमित्य

अप मे ल्यप्—क्त्वा को ल्यप् हुआ,

अप मि य—इकार हुआ,

अपमि त् य सु—तुक्। उदीचां माङो०।

(2) अपमाय

पक्ष में इकार नहीं हुआ।

## (3072) लुङ्लङ्लृङ्क्ष्वडुदात्तः *71* (2206)

**लुङ्, लङ्, लृङ्-इत्येतेषु परतोऽङ्गस्याडामो भवति, उदात्तश्च स भवति। लुङ्-अकार्षीत्, अहार्षीत्। लङ्-अकरोत्, अहरत्। लृङ्-अकरिष्यत्, अहरिष्यत्।**

**अर्थ**—लुङ्, लङ् तथा लृङ् परे रहते अंगसंज्ञक को 'अट्' आगम होता है और वह आगम उदात्त होता है।

**उदा०** (क) लुङि—

(1) अकार्षीत्

कृ स् त्—लुङ्, इतश्च, च्लि, सिच्,

कृ स् ई त्—अस्तिसिचो०, वृद्धि,

अकार्षीत्—अट्, षत्व।

(2) अहार्षीत् (पूर्ववत्)।

**(ख) लङि—**

(3) अकरोत्

कृ तिप्—लङ्, इतश्च, शप् को बाध कर 'उ',

कर् उ त्—तनादिकृञ्भ्य उः,

अकरोत्—अट्।

(4) अहरत् (पूर्ववत्)।

**(ग) लृङि—**

(5) अकरिष्यत्

कृ स्य तिप्—लृङ्, स्यतासी०,

कर् इट् स्य त्—इतश्च, वलादिक इट्, गुण,

अकरिष्यत्—षत्व, अट्।

(6) अहरिष्यत् (पूर्ववत्)।

## (3073) आडजादीनाम् *72* (2254)

आडागमो भवत्यजादीनां लुङ्लङ्लृङ्क्षु परतः, उदात्तश्च स भवति। ऐक्षिष्ट। ऐहिष्ट। औब्जीत्। औम्भीत्। लङ्–ऐक्षत। ऐहत। औब्जत्। औम्भत्। लृङ्–ऐक्षिष्यत। ऐहिष्यत। औब्जिष्यत्। औम्भिष्यत्। इह ऐज्यत, औप्यत, औह्यतेति लङि कृते लावस्थायामाडागमादन्तरङ्गत्वाल्लादेशः क्रियते, तत्र कृते विकरणो नित्यत्वादडागमं बाधते। शब्दान्तरप्राप्तेरडागमस्यानित्यत्वम्; कृते हि विकरणान्तस्याङ्गस्य तेन भवितव्यम्, अकृते तु धातुमात्रस्य 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति' (परि०)। ननु शब्दान्तरादिति विकरणोऽनित्यः ? विकरणे कृते सम्प्रसारणमडागमान्नित्यत्वादेव भवति, सम्प्रसारणे च कृतेऽजाद्यङ्गं जातमिति 'आडजादीनाम्' इत्याडागमः।

अर्थ—लुङ्, लङ् तथा लृङ् प्रत्ययों के परे रहते अजादि अंग को आट् आगम होता है और वह आगम उदात्त होता है।

उदा० (1) ऐक्षिष्ट
ईक्ष् स् त—लुङ्, सिच्,
ईक्ष् इ स् त—वलादिक इट्,
आ ईक्ष् इ ष् त—आट्, षत्व,
ऐक्षिष्ट—'आटश्च' से वृद्धि, ष्टुत्व।

(2) ऐहिष्ट
ईह्—पूर्ववत्।

(3) औब्जीत्
उब्ज्—पूर्ववत्। 'इट ईटि' से सिच् का लोप।

(4) औम्भीत्
उम्भ् स् त्—लुङ्,
उभ् इ ई त्—सिच्, लोप, सवर्ण दीर्घ।

(5) ऐक्षत
ईक्ष् शप् त—लङ्, कर्त्तरि शप्,
आ ईक्षत—पूर्ववत् वृद्धि।

(6) ऐहत
ईह्—शप्, आट्, वृद्धि।

(7) औब्जत्
उब्ज् शप् त्—इतश्च, पूर्ववत् आट्।

(8) औम्भत्
उम्भ्—पूर्ववत्।

(9) ऐक्षिष्यत
ईक्ष् स्य त—लृङ्, स्य,
ईक्ष् इ स्य त—इट्,
आ ईक्षिष्यत—षत्व, आट्, वृद्धि।

(10) ऐहिष्यत
ईह् इ स्य त—पूर्ववत् आट्।

(11) औब्जिष्यत्
उब्ज्—पूर्ववत्।

(12) औम्भिष्यत्
उम्भ् इट् स्य त्—स्य, इतश्च, इट्,
आट् उम्भिष्यत्—षत्व, वृद्धि।

(13) ऐज्यत।

(14) औप्यत।

(15) औह्यत।

इह०—उपर्युक्त तीन स्थलों (संख्या 12,13,14) पर सम्प्रसारणजन्य अजादित्व प्राप्त है। इनमें लङ् करने पर लकार अवस्था में ही 'अट्' आगम की अपेक्षा अन्तरंग होने से लकार के आदेश ('त' आदि) कर दिये जाते हैं। तब ऐसा करने पर नित्य होने के कारण विकरण अट् आगम का बाध कर देता है। विकरणविशिष्ट शब्दान्तर को प्राप्त होने के कारण अट् आगम अनित्य हो जाता है, कारण कि विकरण के कर देने पर तो विकरणान्त अंग को अट् आगम होना चाहिए तथा यदि विकरण नहीं किया जाता है तो धातुमात्र विकरणरहित शब्दान्तर को प्राप्त होने वाली विधि अनित्य होती है।

ननु०—क्या शब्दान्तर से प्राप्त होने के कारण विकरण अनित्य है ? विकरण करने पर सम्प्रसारण अट् आगम के नित्य होने से होता है। यदि सम्प्रसारण के कर लिए जाने पर अंग धातुरूप अजादि हो जाता है।

अतः 'आडजादीनाम्' से 'आट्' हो जाता है।

## (3074) छन्दस्यपि दृश्यते *73* (3545)

छन्दसि विषये आडागमो दृश्यते। यतो हि विहितस्ततोऽन्यत्रापि दृश्यते। 'आडजादीनाम्' (6.4.72) इत्युक्तम्, अनजादीनामपि दृश्यते–'सुरुचो वे॒न आंवः' (वा०सं० 13.3)। आनक्। आयुनक्। 'आवः' इति

वृञो लुङि 'मन्त्रे घसह्वर' (2.4.80) इति लेर्लुकि कृते च भवति, तथा 'आनक्' इति नशेः। 'आयुनक्' इति युजेर्लङि।

**अर्थ**—वेद के विषय में आट् आगम दृष्टिगोचर होता है। जहाँ इसका विधान है, उससे भिन्न स्थल पर भी दृष्टिगोचर होता है। अजादि अंग को 'आट्' होता है। अजादि से अतिरिक्त अंग को भी 'आट्' दृष्टिगोचर होता है।

उदा० (1) सुरुचो वेन आवः (ऋ० 1.33.14)
वृ तिप्—इतश्च,
वर् त्—गुण, हल्ङ्यादि लोप,
आ वर्—आट्।

(2) आनक्
आ नश्—आनक्। 'नशेर्वा' से कुत्व।

(3) आयुनक्
युज् तिप्—लङ्, शप् को बाध कर श्नम्,
यु न ज् त्—इतश्च, हल्ङ्यादि लोप, चोः कुः,
आयुनक्—आट्।

## (3075) न माङ्योगे *74* (2228)

माङ्योगे लुङ्लङ्लृङ्क्षु यदुक्तं तन्न भवति। मा भवान् कार्षीत्। मा भवान् हार्षीत्। मा स्म करोत्। मा स्म हरत्। मा भवानीहिष्ट, मा भवानीक्षिष्ट। मा स्म भवानीहत। मा स्म भवानीक्षत।

**अर्थ**—लुङ्, लङ् तथा लृङ् प्रत्ययों के परे रहते अंगसंज्ञक शब्द को जो कहा गया है, वह न हो 'माङ्' के योग में।

उदा० (1) (मा भवान्) कार्षीत्
कृ स् ई त्—लुङ्, सिच्, ईट्,
कार्षीत्—वृद्धि, षत्व, अट् प्राप्त था, निषेध हुआ।

(2) (मा भवान्) हार्षीत् (पूर्ववत्)।

(3) (मा स्म) करोत्
पूर्ववत् अट् नहीं हुआ।

(4) (मा स्म) हरत् (पूर्ववत्)।

(5) (मा भवान्) ओहिष्ट (पूर्ववत्)।

(6) (मा स्म भवान्) ईहत
आट् नहीं हुआ।

(7) (मा भवान्) ईक्षिष्ट
आट् नहीं हुआ।

(8) (मा स्म भवान्) ईक्षत (पूर्ववत्)।

## (3076) बहुलं छन्दस्यमाङ्योगेऽपि *75* (3546)

छन्दसि विषये माङ्योगेऽपि बहुलमडाटौ भवतः। अमाङ्योगेऽपि न भवतः। अमाङ्योगे तावत्—'जनिष्ठा उग्रः' (ऋ० 10.73.1)। 'काममूनयीः' (ऋ० 1.53.3)। काममर्दयीत्। माङ्योगेऽपि भवतः-'मा वः क्षेत्रे परबीजान्यवाप्सुः' (आ०ध० 2.13.6)। मा अभित्थाः। मा आवः।

**अर्थ**—वेद के विषय में लुङ्, लङ् तथा लृङ् परे रहते माङ् के योग में अट् व आट् आगम बहुलता से होते हैं तथा माङ् का योग न होने पर अट् व आट् नहीं भी होते हैं।

उदा० (क) अमाङ्योगेऽपि न भवतः—

(1) जनिष्ठा उग्रः (ऋ० 10.73.1)
जन् थास्—लुङ्, म०पु० एकवचन,
जन् इट् स् थास्—सिच्, इट्,
जनिष्ठाः—षत्व, ष्टुत्व, अट् प्राप्त था, नहीं हुआ।

(2) काममूनयीः
ऊन् णिच् स् सिप्—चुरादिलक्षण णिच्, लुङ्, म०पु० एकवचन, सिच्,
ऊन् इ इ ई स्—इतश्च, इट ईटि, ह्म्यन्तक्षण० से वृद्धि-निषेध,
ऊनयीः—गुण, अयादेश, विसर्ग, आट् प्राप्त था।

(3) कामम् अर्दयीत्
अर्द् णिच् इ स् ई त्—लुङ् पूर्ववत्,
अर्दयीत्—आट् प्राप्त था।

(ख) माङ्योगेऽपि भवतः—

(4) मा·····अवाप्सुः
अव आप् झि—लुङ्, प्र०पु० बहुवचन,
अव आ आप् स् जुस्—सिच्, झेर्जुस्,
अवाप्सुः—माङ् का योग, आट् हुआ।

(5) मा अभित्थाः
भिद् स् थास्—लुङ्, म०पु० एकवचन, सिच्,
अट् भिद् थास्—झलो झलि,

अभित्थाः—खरि च, माङ् का योग, अट् हुआ।

(6) मा आवः
वृ तिप्—इतश्च,
वर् त्—गुण, हल्ङ्यादि लोप,
आवः—विसर्जनीय, माङ् का योग, आट् हुआ।

## (3077) इरयो रे *76* (3547)

**'इरे'—इत्येतस्य छन्दसि विषये बहुलं 'रे' इत्ययमादेशो भवति। गर्भं प्रथमं दध्र आपः (ऋ० 10.82.5)। याऽस्य परिदध्रे। परिदद्दृश्रे। धाञो रेभावस्यासिद्धत्वादातो लोपो भवति। न च भवति–'परमाया धियोऽग्निकर्माणि चक्रिरे।' अत्र रेशब्दस्य सेटां धातूनामिटि कृते पुना रेभावः क्रियते, तदर्थम् 'इरयोः' इत्ययं द्विवचननिर्देशः।**

अर्थ—वेद के विषय में 'इरे' के स्थान पर बहुलता से 'रे' आदेश होता है।

'इरे' के द्वारा 'लिटस्तझयोरेशिरेच्' के द्वारा विहित 'इरेच्' का ग्रहण होता है। 'इरयोः' इस द्विवचन के निर्देश के द्वारा दोनों प्रकार के 'इरे' का ग्रहण इष्ट है—

(क) 'झ' को प्राप्त इरेच्,

(ख) 'इरेच्' के स्थान पर प्राप्त 'रे', जिसे इट् आगम होकर 'इरे' स्वरूप बन जाता है।

तात्पर्य यह है कि 'इरेच्' के स्थान पर जो 'रे' आदेश होता है, उसे इट् आगम होकर पुनः जो 'इरे' बन जाता है, उसे भी 'रे' आदेश होता है।

उदा० (1) दध्र आपः (ऋ० 10.82.5)
धा झ → धा इरेच्—लिटस्तझयो०,
धा धा इरे—द्वित्व,
ध धा इरे—ह्रस्वः,
द ध् इरे—अभ्यासे चर्च, आतो लोप०,
दध् रे—'रे' आदेश।

(2) परिदध्रे (पूर्ववत्)।
(3) परिदद्दृश्रे
परि दृश् इरेच्—झ, इरेच्,
परि द दृश् रे—द्वित्व, 'रे' पूर्ववत्।

(4) चक्रिरे
कृ इरेच्—'रे' नहीं हुआ।

अत्र०—व्याख्या ऊपर देखें।

## (3078) अचि श्नुधातुभ्रुवां य्वोरियङुवङौ *77* (271)

**श्नुप्रत्ययान्तस्याङ्गस्य धातोरिवर्णोवर्णान्तस्य 'भ्रु' इत्येतस्य च इयङ्, उवङ्–इत्येतावादेशौ भवतोऽजादौ प्रत्यये परतः। आप्नुवन्ति। राध्नुवन्ति। शक्नुवन्ति। धातोः– चिक्षियतुः, चिक्षियुः। लुलुवतुः, लुलुवुः। नियौ, नियः। लुवौ, लुवः। भ्रुवौ, भ्रुवः। अचीति किम्? आप्नुयात्। शक्नुयात्। राध्नुयात्। श्नुधातुभ्रुवामिति किम्? लक्ष्म्यै। वध्वै। य्वोरिति किम्? चक्रतुः। चक्रुः। इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन। चयनम्, चायकः। लवनम्, लावकः। *इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानं कर्त्तव्यम्* (म०भा०) तन्वं (अ०वे० 5.3.1) पुषेम तनुवं (तै०सं० 1.5.5.4) पुषेम। विष्वं पुषेम, विषुवं पुषेम। स्वर्गो लोकः, सुवर्गो (तै० 1.5.7.1) लोकः। त्र्यम्बकं (तै० 1.8.6) यजामहे, त्रियम्बकं यजामहे।**

अर्थ—श्नु प्रत्ययान्त, इवर्णान्त, उवर्णान्त धातु तथा भ्रू—इन अंगों को इयङ् तथा उवङ् आदेश होते हैं, अजादि प्रत्यय परे रहते।

ये आदेश 'ङिच्च' से अन्त्य वर्ण को होते हैं।

उदा० (1) आप्नुवन्ति
आप् झि → लट्,
आप् श्नु अन्ति—शप् को बाध कर श्नु, झोऽन्तः,
आप्न् उवङ् अन्ति—स्थानेऽन्तरतमः, ङकार व अकार की इत्संज्ञा,
आप्नुवन्ति—रूप बना।

(2) राध्नुवन्ति
राध् श्नु अन्ति—पूर्ववत्।

(3) चिक्षियतुः
क्षि अतुस्,—लिट्, तस्,
क्षि क्षि अतुस्—द्वित्व,
चि क्षियङ् अतुस्—हलादिः शेषः, कुहोश्चुः, स्थानेऽन्तरतमः से इयङ्।

(4) चिक्षियुः

क्षि उस्—झि, परस्मैपदानां०, शेष पूर्ववत्।

(5) लुलुवतुः
लू अतुस्—पूर्ववत्, स्थानेऽन्तरतमः से उवङ्।

(6) लुलुवुः
लू उस्—उवङ्।

(7) नियौ
नी औ—इको यणचि, प्रथमयोः पूर्वसवर्णः,
नियङ् औ—इयङ्।

(8) नियः
नी जस्—इयङ्।

(9) लुवौ
औ—पूर्ववत्।

(10) लुवः
लू जस्—उवङ्।

(11) भ्रुवौ
भ्रू औ—उवङ् हुआ।

(12) भ्रुवः
भ्रू जस्—पूर्ववत्।

**अचीति०**—अजादि प्रत्यय परे रहते ही पूर्वोक्त आदेश होते हैं।

(13) आप्नुयात्
आप् श्नु यास् त्—लिङ्, तिप्, इतश्च, श्नु,
आप्नुयात्—अजादि प्रत्यय परे नहीं है, उवङ् नहीं हुआ, स्कोः संयो० से सकारलोप।

(14) शक्नुयात्
पूर्ववत् उवङ् नहीं हुआ।

**श्नुभ्र०**—श्नुप्रत्ययान्त, इवर्णान्त एवं उवर्णान्त धातु तथा भ्रू अंगों को ही पूर्वोक्त आदेश होते हैं।

(15) लक्ष्म्यै
लक्ष्मी ङे—आण्नद्याः,
लक्ष्मी आ ए—आटश्च, इयङ् नहीं हुआ,
लक्ष्म्यै—इको यणचि।

(16) वध्वै
वधू आ ए—पूर्ववत्।

**य्वोरिति०**—इवर्णान्त व उवर्णान्त धातु को ही पूर्वोक्त आदेश होते हैं।

(17) चक्रतुः
कृ अतुस्—लिट्,
च क्र् अतुस्—इयङ्, उवङ् नहीं हुआ।

(18) चक्रुः (पूर्ववत्)।

**इयङुव०**—इयङ्, उवङ् की अपेक्षा विप्रतिषेध से गुण तथा वृद्धि होते हैं।

(19) चयनम्
चि अन—ल्युट्, युवोरनाकौ।

(20) चायकः (पूर्ववत्)।
(21) लवनम् (पूर्ववत्)।
(22) लावकः (पूर्ववत्)।

**इयङुव०**—वेद के विषय में तनु आदि को बहुलता से उवङ् होता है।

(23) तनुवम् (तै०सं० 1.5.5.4)
तनु अम्—उवङ् हुआ।

(24) तन्वम्
उवङ् नहीं हुआ।

(25) विषुवम्
उवङ्।

(26) विष्वम्
उवङ् नहीं हुआ।

(27) त्रियम्बकम्
त्रि अम्बक सु—इयङ् आदेश।

(28) त्र्यम्बकम्
इयङ् नहीं हुआ।

## (3079) अभ्यासस्यासवर्णे *78* (2290)

**अभ्यासस्येवर्णोवर्णान्तस्यासवर्णेऽचि परत इयङ्, उवङ्-इत्येतावादेशौ भवतः। इयेष। उवोष। इयर्त्ति। असवर्ण इति किम्? ईयतुः, ईयुः। ऊवतुः, ऊवुः। (ईषतुः, ईषुः। ऊषतुः, ऊषुः।) 'अचि' इत्येव-इयाज। उवाप।**

**अर्थ**—इवर्णान्त उवर्णान्त अभ्यास को यथासंख्य इयङ् व उवङ् आदेश होते हैं, असवर्ण अच् परे रहते।

**उदा०** (1) इयेष

इष् णल्—लिट्, परस्मैपदानां०, 'पुगन्तलघूपधस्य' से लघूपधगुण तथा द्वित्व—दोनों प्राप्त हैं, तब 'द्विर्वचनेऽचि' से द्वित्व हुआ,

इ इष् अ—हलादि शेष, लघूपधगुण,
इ एष् अ—यण्, इयङ् आदेश,
इय् एष् अ—रूप बना।

(2) उवोष
उस् णल्—पूर्ववत् द्वित्वादि,
उ ओष् अ—उवङ् हुआ।

(3) इयर्त्ति
ऋ तिप्—शप्, जुहोत्यादिभ्यः श्लुः,
ऋ ऋ ति—द्वित्व, उरत्,
अर् ऋ ति—हलादि शेष,
इ ऋ ति—अर्त्तिपिपर्त्योश्च,
इयङ् अर् ति—इयङ् आदेश, गुण,
इयर्त्ति—अचो रहाभ्यां द्वे।

**असवर्ण०—असवर्ण** परे रहते ये आदेश होते हैं।

(4) ईयतुः
इ अतुस्—लिट्,
इ इ अतुस्—द्वित्व, इयङ्,
ईयतुः—सवर्णदीर्घ, विसर्ग।

(5) इयाय—(यह उदाहरण काशिका में नहीं है)

इ अ (लिट्, णल्, अनुबन्धलोप)–अब 'अचो ञ्णिति' (7.2.115) से वृद्धि तथा 6.1.8 से द्वित्व युगपत् प्राप्त होते हैं। 'द्विर्वचनेऽचि' से प्रथम द्वित्व हुआ। इ इ अ—इ ऐ अ (अचो ञ्णिति)—यहाँ 'एचोऽयवायावः' से 'आय्' आदेश (ऐ + अ) तथा प्रकृत सूत्र के द्वारा इयङ् आदेश (इ + ऐ) प्राप्त है। इ ऐ अ—इस दशा में 'अचः परस्मिन्०' से ऐकार को स्थानिवद्भाव होने से असवर्ण वर्ण के प्राप्त न रहने से प्रकृत सूत्र की प्रवृत्ति नहीं होती है, परन्तु 'असवर्णे' पद का योग यहाँ ज्ञापक है कि इस स्थल पर स्थानिवद्भाव नहीं होता है। यदि ऐसा नहीं मानेंगे तो कहीं भी असवर्ण अच् की प्राप्ति नहीं हो सकेगी। 'वार्णादाङ्गं बलीयः' परिभाषा के द्वारा अंगकार्य (इयङ् आदेश) के बलवान् होने से प्रथम इयङ् हुआ। इयङ् ऐ अ। इय् आय् अ (अब आय् हुआ)—इयाय।

(6) ईयुः
इ उस्—पूर्ववत्।

(7) ऊवतुः
पूर्ववत् अभ्यास को उवङ् नहीं हुआ।

(8) ऊवुः (पूर्ववत्)।

**अचि०—**अजादि परे रहते पूर्वोक्त आदेश होते हैं।

(9) इयाज
यज् णल्—द्वित्व, हलादि शेष,
य यज् अ—लिट्यभ्यासस्योभ०,
इ याज् अ—इयङ् नहीं हुआ, अत उपधायाः।

(10) उवाप
वप् णल्—पूर्ववत्।

## (3080) स्त्रियाः *79* (301)

**'स्त्री' इत्येतस्याजादौ प्रत्यये परत इयङादेशो भवति। स्त्री, स्त्रियौ, स्त्रियः। स्त्रीणाम्–इत्यत्र परत्वान्नुडागमः। पृथग्योगकरणमुत्तरार्थम्।**

**अर्थ—**'स्त्री' अंग को 'इयङ्' आदेश होता है अजादि प्रत्यय परे रहते। अलोऽन्त्य परिभाषा के द्वारा ईकार को इयङ् आदेश होता है।

उदा० (1) स्त्रियौ
स्त्री औ—इको यणचि, प्रथमयोः पूर्वसवर्णः,
स्त्रियङ् औ—इयङ्।

(2) स्त्रियः
स्त्री जस्—पूर्ववत्।

(3) स्त्रीणाम्
स्त्री आम्—पर होने से 'नुट्' हुआ।

**पृथक्—**पृथक् योग उत्तर शास्त्र के लिए है।

## (3081) वाऽम्शसोः *80* (302)

**अमि शसि परतः स्त्रियां वा इयङादेशो भवति। स्त्रीं पश्य, स्त्रियं पश्य। स्त्रीः पश्य, स्त्रियः पश्य।**

**अर्थ—**'स्त्री' अंग को विकल्प से 'इयङ्' आदेश है अम् या शस् परे रहते।

उदा० (1) स्त्रियम्
स्त्री अम्—'अमि पूर्वः' को बाध कर इयङ्,
स्त्रियङ् अम्—अनुबन्धलोप।

(2) स्त्रीम्

पक्ष में पूर्वरूप।

(3) स्त्रियः
स्त्री शस्—इयङ्।

(4) स्त्रीः
पक्ष में प्रथमयोः पूर्वसवर्णः।

## (3082) इणो यण् *81* (2455)

**इणोऽङ्गस्य यणादेशो भवति अचि परतः। यन्ति। यन्तु। आयन्। इयङादेशापवादोऽयम्। 'मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते' (व्या०प०) इति गुणवृद्धिभ्यां परात्वादयं बाध्यते। अनयम्। आयकः।**

**अर्थ**—इण् अंग को यण् आदेश होता है, अच् परे रहते।

'इणः' पद के द्वारा व्याख्यानसामर्थ्य से इण् धातु का ग्रहण होता है, न कि इण् प्रत्याहार का। 'स्थानेऽन्तरतमः' से 'इ' के स्थान पर 'य्' होता है।

उदा० (1) यन्ति
इ झि—झोऽन्तः, इको यणचि, अचि श्नु०,
इ अन्ति—इणो यण्, यणादेश।

(2) यन्तु
इ झि—झोऽन्तः एरुः, शेष पूर्ववत्।

(3) आयन्
इ झि—लङ्, इतश्च,
इ अन्त्—संयोगान्तलोप,
यन्—इणो यण्, यणादेश के असिद्ध होने से 'आट्' आगम,
आयन्—आडजादीनाम्।

**इयङा०**—यह इयङ् आदेश का अपवाद है। मध्यवर्त्ती अपवाद पूर्ववर्त्ती विधियों का बाध करते हैं।

शंका होती है कि इल्युट्—अयनम् तथा इण्वुल्—आयकः में उक्त यण् आदेश क्यों नहीं प्रसक्त होता है? 'इणो यण्' सूत्र 'अचि श्नुधातुभ्रुवां०' के पश्चात् पढ़ा गया है। 'अचो ञ्णिति' (7.2.115) तथा गुणविधायक सूत्र 'सार्वधातुकार्ध०' (7.3.84)—दोनों सप्तम अध्याय में पठित हैं। यणादेश पूर्वोक्त इयङ्, वृद्धि तथा गुण के मध्य पढ़ा गया है। 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' (प०) अर्थात् जो अपवाद मध्य में पठित हैं, वे पूर्व विधि का ही बाध करते हैं, बाद वाली विधि का नहीं। अतः 'इणो यण्' इयङ् का बाध करेगा, न कि गुण (अयनम्) का अथवा वृद्धि (आयकः) का।

(4) अयनम्
इ ल्युट्–पूर्ववत्।

(5) आयकः
इ ण्वुल्–पूर्ववत्।

## (3083) एरनेकाचोऽसंयोगपूर्वस्य *82* (272)

**धातोरिति वर्त्तते, तेन संयोगो विशेष्यते। धातोरवयवः संयोगः पूर्वो यस्मादिवर्णान्न भवति असावसंयोगपूर्वः, तदन्तस्याङ्गस्यानेकाचोऽचि परतो यणादेशो भवति। निन्यतुः, निन्युः। उन्न्यौ, उन्न्यः। ग्रामण्यौ, ग्रामण्यः। एरिति किम्? असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्याद्, अङ्गविशेषणं मा भूदिति। लुलुवतुः, लुलुवुः–इत्येतत्तु 'ओः सुपि' (6.4.83) इति नियमादपि सिध्यति। अनेकाच इति किम्? नियौ, नियः। असंयोगपूर्वस्येति किम्? यवक्रियौ। यवक्रियः। धातुना संयोगविशेषणं किम्। इहापि न स्याद्–उन्न्यौ, उन्न्य इति। *गतिकारकाभ्यामन्यपूर्वस्य नेष्यते*। परमनियौ। परमनिय इति।**

**अर्थ**—'धातोः' का अनुवर्त्तन है। इसका विशेषण संयोग है। धातु का अवयव जो संयोग, वह नहीं है पूर्व में जिसके, ऐसा इवर्ण, तदन्त धातु, वह धातु है अन्त में जिसके, ऐसे अनेकाच् अंग को यण् आदेश होता है, अजादि प्रत्यय परे रहते।

'अचि श्नुधातुभ्रुवां० से अनुवृत्त 'धातु' पद की द्विरुक्ति की जाती है। एक 'धातोः' पद 'एः' का विशेष्य बनता है और दूसरा 'धातोः' पद असंयोगपूर्वस्य पद के 'संयोग' अंश के साथ सम्बद्ध होता है।

उदा० (1) निन्यतुः
नी अतुस्—लिट्,
नी नी अतुस्—द्वित्व,
नि न्यतुस्—ह्रस्वः, इयङ् को बाध कर यण्।

(2) निन्युः
नी उस्—झि, उस् आदेश, शेष पूर्ववत्।

(3) उन्न्यौ
उन्नी औ—'इको यणचि' से प्राप्त यण् का बाध करके 'प्रथमयोः पूर्व०' से पूर्वसवर्ण प्राप्त हुआ, दीर्घाज्जसि च, इको यणचि, अचि श्नुधातु०,
उन्न्य् औ—यण् हुआ।

(4) उन्न्यः
उन्नी जस्—पूर्ववत्।

(5) ग्रामण्यौ
ग्रामणी औ—पूर्ववत्।

(6) ग्रामण्यः (पूर्ववत्)।

**एरिति०—इवर्ण** के स्थान पर ही यण् होता है। संयोग पूर्व में नहीं है, ऐसा इवर्ण। यहाँ अंग का विशेषण नहीं है।

(7) लुलुवतुः
लू अतुस्—लिट्, तस्,
लु लू अतुस्—'लुलू' अनेकाच् है, अन्त में 'लू' धातु है, इसके उकार से पूर्व संयोग नहीं है, अतः यण् प्राप्त हुआ, परन्तु 'लुलू' अंग के अन्त में 'इ' नहीं है।

(8) लुलुवुः
उस्—पूर्ववत्।

**अनेका०—अनेकाच्** अंग का जो इकार, उसे यण् होता है।

(9) नियौ
नी औ—अनेकाच् नहीं है, यण् नहीं हुआ, इयङ् हुआ।

(10) नियः
जस्—पूर्ववत्।

**असंयोग०—संयोग नहीं है पूर्व** में जिसके, ऐसे इकार को यण् होता है—

(11) यवक्रियौ
यवक्री—अनेकाच् है, धातु है, परन्तु इवर्ण से पूर्व 'क्र्' संयोग है, यण् नहीं हुआ, इयङ् हुआ।

(12) यवक्रियः
जस्—पूर्ववत् इयङ्।

**धातुना०—संयोग** धातु का अवयव हो तो पूर्वोक्त यण् होता है।

(13) उन्न्यौ
उन्नी औ—'उन्नी' अनेकाच् है, 'नी' इवर्णान्त धातु है, वह अंग 'उन्नी' के अन्त में है, धातु के इवर्ण से पूर्व 'न्न्' यह संयोग है; परन्तु यह धातु का अवयव नहीं है, उपसर्ग से निष्पन्न है, अतः यण् का निषेध नहीं हुआ।

(14) उन्न्यः (पूर्ववत्)।

(15) प्रध्यौ
इसी प्रकार 'प्रधी' में संयोग उपसर्ग का अवयव है; धातु का नहीं।

**गतिकारक०**—जिस शब्द के पूर्व पद में गतिसंज्ञक या कारक से भिन्न शब्द हो तो पूर्वोक्त यण् नहीं होता है।

(16) परमनियौ
परमनी औ—'परम' की न गति संज्ञा है तथा न ही कारक। यण् नहीं हुआ, इयङ् हुआ।

(17) परमनियः (पूर्ववत्)।

### (3084) ओः सुपि *83* (281)

**धात्ववयवः संयोगः पूर्वो यस्मादुवर्णान्न भवति तदन्तस्याङ्गस्यानेकाचोऽजादौ सुपि परतो यणादेशो भवति। खलप्वौ, खलप्वः। शतस्वौ, शतस्वः। सकृल्ल्वौ, सकृल्ल्वः। सुपीति किम्। लुलुवतुः, लुलुवुः। 'अनेकाचः' इत्येव–लुवौ, लुवः। 'असंयोगपूर्वस्य' इत्येव–कटप्रुवौ, कटप्रुवः। 'गतिकारकाभ्यामन्यपूर्वस्य नेष्यते' इत्येव–परमलुवौ, परमलुवः।**

**अर्थ**—धातु का अवयवसंयोग जिसके पूर्व में नहीं है, ऐसा उवर्ण, तदन्त जो धातु, तदन्त अनेकाच् अंग को यण् आदेश होता है, अजादि सुप् परे रहते।

उदा० (1) खलप्वौ
खलं पुनाति—अन्येभ्योऽपि दृश्यते, क्विप्,
खलपू औ—इको यणचि, प्रथमयोः पूर्व०, दीर्घाज्जसि च, इको यणचि आदि लगकर 'अचि श्नु०' से उवङ् प्राप्त हुआ,
खलप्व् औ—अजादि सुप् 'औ' परे रहते उवङ् का बाध कर यण्।

(2) खलप्वः (पूर्ववत्)।

(3) शतस्वौ
शतं सूते—'सत्सूद्विष०' से क्विप्,
शत सू औ—पूर्ववत् उवङ् की प्राप्ति, प्रकृत सूत्र से यण्।

(4) शतस्वः
शत सू जस्—पूर्ववत् यण्।

(5) सकृल्ल्वौ
सकृत् लू—'तोर्लि' से परसवर्ण।
सकृल्लू औ—पूर्ववत् सभी सूत्र।

(6) सकृल्ल्वः
जस्—शेष पूर्ववत्।

सुपीति०—सुप् परे रहते पूर्वोक्त यण् होता है।

(7) लुलुवतुः
लू अतुस्—लिट्, तस्, द्वित्व,
लुलू अतुस्—अंगसंज्ञा, अजादि परे है; परन्तु सुप् नहीं है, यण् नहीं हुआ, उवङ् हुआ।

(8) लुलुवुः
उस्—पूर्ववत् यण् नहीं हुआ।

अनेकाचः—अनेकाच् अंग के उवर्ण को यण् होता है।

(9) लुवौ
लू औ—अनेकाच् अंग नहीं है, यण् नहीं हुआ।

(10) लुवः
लू जस्—पूर्ववत्।

असंयोग०—संयोग नहीं है पूर्व में जिसके, ऐसे उवर्ण को यणादेश होता है।

(11) कटप्रुवौ
कटप्रू क्विप्—'क्विब्वचिप्रच्छ्यायत०', सर्वापहार लोप,
कटप्रू औ—'कटप्रू' अंग अनेकाच् है, अजादि सुप् परे है, उवर्ण से पूर्व संयोग 'प्र्' है, यण् नहीं हुआ।

(12) कटप्रुवः (पूर्ववत्)।

गति०—गति व कारक से भिन्न शब्द पूर्व में हो तो यण् नहीं होता है।

(13) परमलुवौ
यण् नहीं हुआ।

(14) परमलुवः (पूर्ववत्)।

### (3085) वर्षाभ्वश्च *84* (282)

**वर्षाभू-इत्येतस्याजादौ सुपि परतो यणादेशो भवति। वर्षाभ्वौ, वर्षाभ्वः। *'पुनर्भ्वश्चेति वक्तव्यम्*' (का० वा०) पुनर्भ्वौ, पुनर्भ्वः। कारापूर्वस्यापीष्यते-काराभ्वौ, काराभ्वः।**

अर्थ—अजादि सुप् परे रहते 'वर्षाभू' अंग को यण् आदेश होता है।

उदा० (1) वर्षाभ्वौ
वर्षाभू औ—इको यणचि, प्रथमयोः पूर्व०, दीर्घाज्जसि च, इको यणचि, अचि श्नुधातु०, ओः सुपि से यण् प्राप्त हुआ, 'न भूसुधियोः' से यण् का निषेध, पुनः उवङ् आदेश प्राप्त हुआ, प्रकृत सूत्र से यण्।

(2) वर्षाभ्वः
जस्—पूर्ववत्।

पुनर्भ्व०—पुनर्भू शब्द को 'यण्' होता है।

(3) पुनर्भ्वौ
पुनर् भवति—क्विप्,
पुनर्भू औ—यण् हुआ।

(4) पुनर्भ्वः
जस्—पूर्ववत्।

कारा०—कारा शब्द पूर्व में हो तो 'भू' को यण् होता है।

(5) काराभ्वौ
कारा भू औ—पूर्ववत् यण्।

(6) काराभ्वः
जस्—पूर्ववत्।

### (3086) न भूसुधियोः *85* (273)

**भू, सुधी-इत्येतयोर्यणादेशो न भवति। प्रतिभुवौ, प्रतिभुवः। सुधियौ, सुधियः।**

अर्थ—भू और सुधी अंगों को यण् नहीं होता है, अजादि सुप् परे रहते।

उदा० (1) प्रतिभुवौ
प्रतिभू औ—इको यणचि, प्रथमयोः पूर्व०, दीर्घाज्जसि च, इको यणचि, अचि श्नुधातु०, ओः सुपि, न भूसुधियोः, पुनः उवङ् होकर रूप बनता है।

(2) प्रतिभुवः
प्रतिभू जस्—पूर्ववत्।

(3) सुधियौ
सुधी औ—इको यणचि, प्रथमयोः पूर्व०, दीर्घाज्जसि च, इकोः यणचि, अचि श्नुधातु०, एरनेकाच०, न भूसुधियोः से निषेध, उवङ् हुआ।

(4) सुधियः
सुधी जस्—पूर्ववत्।

**(3087) छन्दस्युभयथा *86* (3548)**

छन्दसि विषये भू, सुधी—इत्येतयोरुभयथा दृश्यते। 'वनेषु चित्रं विभ्वं विशे' (ऋ० 4.7.1), विशे विभुवम् (तै०सं० 1.5.5)। सुध्यो हव्यमग्ने, सुधियो हव्यमग्ने।

अर्थ—वेद के विषय में भू तथा सुधी अंगों को दोनों प्रकार से होता है अर्थात् कहीं यण् होता है तथा कहीं यण् दिखायी नहीं पड़ता है।

उदा० (1) विभ्वम् (ऋ० 4.7.1)
यण् हुआ।

(2) विभुवम् (तै०सं० 1.5.5.1)
उवङ् हुआ।

(3) सुध्यः (ऋ० 6.1.7)
यण् हुआ।

(4) सुधियः
इयङ् हुआ।

**(3088) हुश्नुवोः सार्वधातुके *87* (2387)**

'हु' इत्येस्याङ्गस्य श्नुप्रत्ययान्तस्यानेकाचोऽसंयोगपूर्वस्याजादौ सार्वधातुके परतो यणादेशो भवति। जुह्वति, जुह्वतु। जुह्वत्। सुन्वन्ति, सुन्वन्तु, असुन्वन्। हुश्नुवोरिति किम्? योयुवति। रोरुवति। इदमेव हुश्नुग्रहणं ज्ञापकम्—भाषायामपि यङ्लुगस्तीति। छन्दसि 'छन्दस्युभयथा' (6.4.86) इत्यार्धधातुकत्वादेव यणादेशस्याप्रसङ्गः। न च यङ्लुगन्तादन्यत् प्रत्युदाहरणम् उवर्णान्तमनेकाजसंयोगपूर्वं सार्वधातुके विद्यते। सार्वधातुक इति किम्? जुहुवतुः, जुहुवुः। 'असंयोगपूर्वस्य' इत्येव—आप्नुवन्ति। राध्नुवन्ति।

अर्थ—हु धातु तथा श्नु प्रत्ययान्त—इन अनेकाच् अंगों के असंयोग पूर्व (= संयोग नहीं है पूर्व में जिसके) उकार को यण् आदेश होता है अजादि सार्वधातुक परे रहते। 'असंयोगपूर्वस्य' पद 'ओः' का विशेषण है।

उदा० (1) जुह्वति
हु झि—लट्, प्र०पु० बहुवचन,
जु हु अति—शप्, जुहोत्यादिभ्यः श्लुः, द्वित्व, अदभ्यस्तात्,
जु ह् व् अति—'इको यणचि' से प्राप्त यण् को बाध कर 'अचिश्नु०' से उवङ् प्राप्त हुआ, प्रकृत सूत्र से यण्।

(2) जुह्वतु
हु झि—लोट्,
जुह्वति—पूर्ववत्,
जुह्वतु—एरुः।

(3) जुह्वत्
हु शतृ—लट्, शतृ आदेश, शप्, श्लु,
जु हु अत्—द्वित्व, पूर्ववत् यण्,
जुह्वत् सु—विभक्तिकार्य।

(4) सुन्वन्ति
षु → सु झि—धात्वादेः षः सः, लट्,
सु श्नु अन्ति—शप् को बाध कर श्नु, झोऽन्तः
सुन्वन्ति—यण्।

(5) सुन्वन्तु
सु झि—लोट्,
सुन्वन्ति—पूर्ववत्,
सुन्वन्तु—एरुः।

(6) असुन्वन्
सु झि—लङ्, झोऽन्तः, इतश्च,
सुन्वन्त्—संयोगान्तलोप,
असुन्वन्—अट् आगम।

हुश्नुवो०—हु धातु तथा श्नु प्रत्ययान्त अनेकाच् अंग को ही यण् होता है।

(7) योयुवति
यु यङ्—यङ्लुक्, यङोऽचि च, गुणो यङ्लुकोः,
यो यु अति—धातुसंज्ञा, झि,
यो युव् अति—यण् नहीं हुआ।

(8) रोरुवति
रु—यङ्लुक् होकर पूर्ववत् यण् का निषेध।

इदमेव०—यह हु तथा श्नु का ग्रहण ज्ञापक है कि भाषा में यङ्लुक् होता है। 'योयुवति'—इस स्थल पर वेद में 'छन्दस्युभयथा' (3.4.117) से आर्धधातुक होकर यण् प्राप्त ही नहीं होता है तथा यङ्लुगन्त से भिन्न अन्य प्रत्युदाहरण प्राप्त नहीं है, जहाँ असंयोगपूर्व वाला उवर्णान्त अनेकाच् से परे सार्वधातुक हो।

भाव यह है कि वेद में यङ्लुक् होता तो 'छन्दस्युभयथा' से 'योयुवति' जैसे स्थलों पर आर्धधातुक संज्ञा होकर यण् प्राप्त ही नहीं था। तब 'हुश्नुवोः सार्व०' से सार्वधातुक-प्रतिषेध की

आवश्यकता ही नहीं थी। अतः 'हुश्नुवो०' सूत्र व्यर्थ होकर ज्ञापित करता है कि वेद में यङ्लुक् नहीं होता है।

**सार्वधातु०**—सार्वधातुक प्रत्यय परे रहते यण् होता है।

(9) जुहुवतुः
हु अतुस्—लिट्, तस्, आर्धधातुक संज्ञा,
जुहु अतुस्—द्वित्व, अभ्यासकार्य,
जुहुव् अतुस्—'जुहु' अनेकाच् अंग से पर सार्वधातुक नहीं है, यण् नहीं हुआ।

(10) जुहुवुः
उस्—पूर्ववत्।

**असंयोग०**—संयोग नहीं है पूर्व में जिसके, ऐसे उवर्ण को यण् होता है।

(11) आप्नुवन्ति
आप् श्नु अन्ति—लट्, झि, झोऽन्तः, श्नु,
आप्नुव् अन्ति—यण् नहीं हुआ।

(12) राध्नुवन्ति (पूर्ववत्)।

### (3089) भुवो वुग्लुङ्लिटोः *88* (2174)

**भुवो वुगागमो भवति लुङि लिटि चाजादौ परतः। अभूवन्। अभूवम्। लिट्-बभूव, बभूवतुः, बभूवुः।**

**अर्थ**—'भू' अंग को 'वुक्' आगम होता है लुङ् व लिट्-सम्बन्धी अच् प्रत्यय परे हो तो। वुक् के ककार की इत् सञ्ज्ञा है। उकार मुखसुखार्थ है।

उदा० (1) अभूवन्
भू झि—लुङ् प्र०पु० बहुवचन, झोऽन्तः,
भू अन्त्—इतश्च, च्लि, सिच्,
भू स् अन्त्—गातिस्था० से सिच् का लुक्,
भू व् अन्त्—भुवो वुग्०,
अभूवन्—अट्, संयोगान्तलोप।

(2) अभूवम्
भू मिप्—लुङ्, अम् आदेश,
भू व् अम्—पूर्ववत्, वुक्,
अभूव् अम्—अट्।

(3) बभूव
भू णल्—परोक्षे लिट्, तिप्, परस्मैपदानां०,
भू व् अ—'अचो ञ्णिति' (7.2.115) से वृद्धि तथा प्रकृत सूत्र से वुक् आगम की युगपत् प्राप्ति, वुगागम नित्य[1] होने से वृद्धि को बाध कर वुक्,
भूव् भूव् अ—लिटि धातोरनभ्या०, अभ्यासकार्य,
भु भूव् अ—अभ्यासे चर्च, भवतेरः,
बभूव् अ—रूप।

(4) बभूवतुः
भू अतुस्—पूर्ववत् सभी कार्य।

(5) बभूवुः
भू झि—पूर्ववत्।

### (3090) ऊदुपधाया गोहः *89* (2364)

**गोहोऽङ्गस्य उपधाया ऊकारादेशो भवति अजादौ प्रत्यये परतः। निगूहयति। निगूहकः। साधु निगूही। निगूहं-निगूहम्। (निगूहन्ति)। निगूहो वर्त्तते। उपधाया इति किम्? अलोऽन्त्यस्य मा भूत्। 'गोहः' इति विकृतग्रहणं विषयार्थम् (म० भा०)। यत्रास्यैतद्रूपं तत्रैव यथा स्यात्, इह मा भूत्-निजुगुहतुः, निजुगुहुः। अयादेशप्रतिषेधार्थं च केचिदिच्छन्ति। निगूह्य गत इत्यूत्वस्यासिद्धत्वाद् 'ल्यपि लघुपूर्वात्' (6.4.56) इत्ययादेशः स्यात्। व्याश्रयत्वादे-वासिद्धत्वमत्र नास्ति-णावूत्वम्, ण्यन्तस्य च ल्यप्ययादेश इति। अचीत्येव-निगोढा। निगोढुम्।**

**अर्थ**—'गोह' अंग की उपधा को ऊकार आदेश होता है, अजादि प्रत्यय परे रहते। तकार उच्चारणार्थ है।

उदा० (1) निगूहति
नि गुह् तिप्—लट्,
नि गोह् अ ति—शप्, लघूपधगुण,
निगूहति—ऊकार।

(2) निगूहकः
नि गुह् ण्वुल्—युवोरनाकौ,
निगोह् अक—लघूपधगुण,
निगूहकः—ऊकार, सु।

(3) निगूही

1. चूँकि 'वुक्' करने पर इगन्त अंग नहीं रहता है; अतः गुण तथा वृद्धि प्राप्त नहीं होते हैं। इसलिए वुक् नित्य तथा गुण-वृद्धि अनित्य है। अनित्य की अपेक्षा नित्य बलवान् होता है। अतः वुक् आगम गुण व वृद्धि का बाधक है।

नि गुह् णिनि—'सुप्यजातौ णिनि०'
नि गोहिन्—ऊकार,
निगूही—सु।

(4) निगूहं निगूहम्
नि गुह् णमुल्—आभीक्ष्ण्ये०,
नि गोह् अम्—पूर्ववत् ऊकार, 'आभीक्ष्ण्ये०' (8.1.12—वा०) से द्विरुक्ति।

(5) निगूहन्ति
नि गुह् झि—पूर्ववत्।

(6) निगूहः
नि गुह् घञ्—पूर्ववत्।

**उपधाया०—उपधा** के स्थान पर ही ऊकार होता है। तब अलोऽन्त्य परिभाषा लागू नहीं होती है।

**गोहः**—'गोहः' इस प्रकार गुणयुक्त निर्देश विषय के नियमार्थ है। यह नियम करता है कि जहाँ 'गुह्' को लघूपधगुण होकर 'गोह्' ऐसा रूप मिलता है, वहाँ पर ही ऊकार होता है।

(7) निजुगुहतुः
गुह् अतुस्—लिट् के कित् होने से लघूपधगुण नहीं हुआ, 'गोह्' न होने से ऊकार भी नहीं हुआ,
निजुगुहतुः—द्वित्वादि।

(8) निजुगुहुः (पूर्ववत्)।

**अयादेश०**—कुछ विद्वान् 'गोहः' निर्देश का प्रयोजन अयादेश का निषेध स्वीकार करते हैं।

(9) निगूह्य
नि गुह् णिच् ल्यप्—क्त्वा, ल्यप् आदेश, लघूपधगुण,
नि गोह् य—ऊकार,
नि गूह् य—यहाँ ऊत्व के 'असिद्धवदत्राभात्' से असिद्ध होने से 'ल्यपि लघुपूर्वात्' से णि को अयादेश प्राप्त है, इसके निषेध[1] के लिए 'गोहः' ऐसा निर्देश किया गया है।

**अचीत्ये०**—अजादि प्रत्यय परे रहते ही ऊकार होता है।

(10) निगोढा
नि गुह् तृच्—लघूपधगुण, ऊकार नहीं हुआ, हो ढः, झषस्त०,
नि गोढ्, ढृ—ष्टुत्व,
निगोढा—ढो ढे लोपः, सु।

(11) निगोढुम्
नि गुह् तुमुन्—पूर्ववत् ऊकार नहीं हुआ।

## (3091) दोषो णौ *90* (2604)

**दोष उपधाया ऊकार आदेशो भवति णौ परतः। दूषयति। दूषयतः। दूषयन्ति। विकृतग्रहणं प्रक्रमाभेदार्थम्। पूर्वत्र हि 'गोहः' इत्युक्तम्। णाविति किम्? दोषो वर्तते।**

**अर्थ**—'णि' परे रहते 'दोष' अंग की उपधा के स्थान पर ऊकार होता है।

**उदा०** (1) दूषयति
दुष् णिच् तिप्—शप्, लघूपधगुण,
दूष य् अ ति—ऊकार।

(2) दूषयतः (पूर्ववत्)।

(3) दूषयन्ति (पूर्ववत्)।

**विकृत०**—'दोषः' यह विकृत निर्देश प्रकरण की समरूपता के लिए है। पिछले सूत्र में गुणयुक्त 'गोहः' ऐसा निर्देश किया गया है। प्रकरण में समरूपता बनी रहे, इसके लिए यह विकृत निर्देश किया गया है।

**णौ**—णि परे रहते ही ऊकार होता है।

(4) दोषः
यहाँ ऊकार नहीं हुआ।

## (3092) वा चित्तविरागे *91* (2605)

**चित्तविकारार्थे दोष उपधाया वा ऊकारादेशो भवति णौ परतः। चित्तं दूषयति, चित्तं दोषयति। प्रज्ञां दूषयति, प्रज्ञां दोषयति।**

**अर्थ**—'दोष्' अंग की उपधा के स्थान पर ऊकार आदेश विकल्प से होता है, चित्तविकार अर्थ गम्यमान हो तो।

**उदा०** (1) दूषयति चित्तम्
दुष् णिच् शप् ति—लघूपधगुण,
दोषि अ ति—ऊकार।

1. णि परे रहते ऊकार होता है तथा ल्यप् परे रहते अय् होता है। इन दोनों की प्रवृत्ति भिन्न-भिन्न निमित्तों पर आश्रित होने से असिद्धभाव नहीं होता है। अय् आदेश नहीं होता है। तब 'गोहः' इस निर्देश का फल अयादेश-प्रतिषेध सिद्ध होता है।

